राज्यं प्राप्स्यसि पुत्र ! त्वं सफलायाः प्रसादतः ।
तथेत्युक्ते तु वचसि दिव्यरूपधरोऽभवत् ॥ ४३ ॥
मतिरासीत्ततस्तस्य परमावैष्णवी नृप । दिव्याभरणशोभाढ्यो लेभे राज्यमकण्टकम्
कृतं राज्यं तु तेनैवं वर्षाणि दशपञ्चच । मनोज्ञास्तस्य पुत्रास्तु दाराः कृष्णप्रसादतः
आशु राज्यं परित्यज्य पुत्रे चैव समर्प्य च ।
ततः कृष्णस्य सान्निध्यं यत्र गत्वा न शोचति ॥ ४६ ॥
एवं यः कुरुते राजन्सफलाव्रतमुत्तमम् । इहलोके सुखं प्राप्य मृतो मोक्षमवाप्नुयात् ॥
धन्यास्ते मानवा लोके सफलायां च ये रताः ।
तेषां च सफलं जन्म नात्र कार्या विचारणा ॥ ४८॥
पठनाच्छ्रवणाच्चैव करणाच्च विशांपते ! । राजसूयस्य यज्ञस्य फलमाप्नोति मानवः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-
नारदसंवादे पौषकृष्णासफलैकादशी नामैकचत्वारिंशोऽध्यायः ॥४१॥

---

## द्विचत्वारिंशोऽध्यायः

### पौषशुक्लपक्षपुत्रदैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

कथिता वै त्वया कृष्ण सफलैकादशी शुभा । कथयस्वप्रसादेन शुक्लपक्षस्य या भवेत्
किन्नाम को विधिस्तस्याः को देवस्तत्र पूज्यते ।
कस्मै तुष्टो हृषीकेशस्त्वमेव पुरुषोत्तमः ॥ २ ॥

श्रीकृष्ण उवाच ।

शृणु राजन्प्रवक्ष्यामि शुक्ला पौषस्य या भवेत् ।
कथयामि महाराज ! लोकानां हितकाम्यया ॥ ३ ॥

पूर्वेण विधिना राजन्कर्त्तव्यैषा प्रयत्नतः। पुत्रदा नाम नाम्ना सा सर्वपापहरापरा ॥४

नारायणोऽधिदेवोऽस्याः कामदः सिद्धिदायकः।
नातः परतरा काचित्त्रैलोक्ये सचराचरे ॥ ५ ॥

विद्यावन्तं यशस्वन्तं करोति च नरं हरिः। शृणु राजन्प्रवक्ष्यामि कथां पापहरां पराम्

भद्रावत्यां पुरा ह्यासीत्पुर्यां राजा सुकेतुमान्।
तस्य राज्ञस्तथा राज्ञी चम्पका नाम वर्त्तते ॥ ७ ॥

पुत्रहीनेन राज्ञा च कालोनीतो मनोरथैः। नैवात्मजं नृपो लेभे वंशकर्त्तारमेव च ॥८॥

तेनैव राज्ञाधर्मेण चिन्तितं बहुकालतः। किं करोमि क्व गच्छामि सुतप्राप्तिः कथं भवेत्

न राष्ट्रे न पुरे सौख्यं लेभे राजा सुकेतुमान्।
साध्व्या स्वकान्तया सार्धं प्रत्यहं दुःखितोऽभवत् ॥ १०

तावुभौ दम्पती नित्यं चिन्ताशोकपरायणौ। पितरोऽस्य जलं दत्तं कवोष्णमुपभुञ्जते

राज्ञःपश्चान्न पश्यामो योऽस्मान्संतर्पयिष्यति।
इत्येवं संस्मरन्तोऽस्य दुःखिताःपितरोऽभवन् ॥ १२ ॥

न बान्धवा न मित्राणि नामात्याःसुहृदस्तथा।
रोचयन्त्यस्य भूपस्य न गजाश्वाः पदातयः ॥ १३ ॥

नैराश्यं भूपतेस्तस्य नित्यं मनसिवर्त्तते ! नरस्य पुत्रहीनस्य नास्ति वै जन्मनःफलम् ॥

अपुत्रस्य गृहं शून्यं हृदयं दुःखितं सदा। पितृदेवमनुष्याणां नानृणत्वं सुतं विना ॥१५

तस्मात्सर्वप्रयत्नेन सुतमुत्पादयेन्नरः। इहलोके यशस्तेषां परलोके शुभागतिः ॥१६॥

येषां तु पुण्यंकर्तॄणां पुत्रजन्म गृहे भवेत्। आयुरारोग्य संपत्तिस्तेषां गेहे प्रवर्तते ॥

पुत्रजन्म गृहे येषां लोकानां पुण्यकारिणाम्।
पुण्यं विना न च प्राप्तिर्विष्णुभक्तिं विना नृप ॥ १८ ॥

पुत्राश्च संपदो वापि निश्चयादिति मे मतिः। एवं चिन्तयमानोऽसौ न शर्म लभते नृपः

प्रत्यूषेऽचिन्तयद्राजा निशीथेऽचिन्तयत्ततः।
स्वयमात्मविनाशं च चिन्तयामास केतुमान् ॥ २० ॥

आत्मघाते दुर्गतिं च चिन्तयित्वा तदा नृपः । दृष्ट्वाऽऽत्मदेहं पतितमपुत्रत्वं तथैव च
पुनर्विचार्यात्मबुद्धया आत्मनो हितकारणम् । अश्वारूढस्ततो राजा जगाम गहनं वनम्
पुरोहितादयः सर्वे न जानन्ति गतं नृपम् । गम्भीरे विपिने राजा मृगपक्षिनिषेविते ॥
विचचार तदा राजा वनवृक्षान्विलोकयन् । वटानश्वत्थबिल्वांश्च खर्जूरान्पनसांस्तथा
वकुलान्सप्तपर्णांश्च तिन्दुकांस्तिलकानपि । शालांस्तालांस्तमालांश्च ददर्श सरलान्नृपः
इङ्गुदी ककुभांश्चैव श्लेष्मातकनगांस्तथा । शल्लकान्करमर्दांश्च पाटलान्बदरानपि ॥२६
अशोकांश्च पलाशांश्च शृगालाञ्शशकानपि । वनमार्जारमहिषाञ्छल्लकांश्चमरानपि ॥
ददर्श भुजगान्राजा वल्मीकादर्धनिःसृतान् । तथा वनगजान्मत्तान्कलभैः सह संगतान्

यूथपांश्च चतुर्दन्तान्करिणीयूथमध्यगान् ।
तान्दृष्ट्वा चिन्तयामास आत्मनः स गजान्नृपः ॥ २६ ॥

तेषां स विचरन्मध्ये राजा शोभामवाप ह । महदाश्चर्यसंयुक्तं ददृशे विपिनं नृप ॥३०
मार्गे शिवारुताञ्छृण्वन्नुलूकविरुतं तथा । तांस्तानृक्षमृगान्पश्यन्बभ्राम वनमध्यतः ॥
एवं ददर्श गहनं नृपो मध्यगते रवौ । क्षुत्तृड्भ्यां पीडितो राजा इतश्चेतश्च धावति ॥
नृपतिश्चिन्तयामास संशुष्कगलकन्धरः । मया तु किं कृतं कर्म प्राप्तं दुःखं यदीदृशम्
मया वै तोषिता देवा यज्ञैःपूजाभिरेव च । तथैव ब्राह्मणा दानैस्तोषिता मिष्टभोजनैः

प्रजाश्चैव सदाकालं पुत्रवत्पालिता भृशम् ।
कस्माद्दुःखं मया प्राप्तमीदृशं दारुणं महत् ॥ ३५ ॥

इति चिन्तापरो राजा जगामैवाग्रतो वनम् । सुकृतस्य प्रभावेण सरोदृष्टमनुत्तमम् ॥
मीनसंस्पृश्यमानं च पद्मैश्च परिशोभितम् । कारण्डैश्चक्रवाकैश्च राजहंसैश्च शोभितम्
मकरैर्बहुभिर्मत्स्यैरन्यैर्जलचरैर्युतम् । समीपे सरसस्तस्य मुनीनामाश्रमान्बहून् ॥३८॥
ददर्श राजा लक्ष्मीवाञ्छकुनैःशुभशंसिभिः । दक्षिणं प्रास्फुरन्नेत्रमथ सव्येतरः करः ॥
प्रास्फुरन्नृपतेस्तस्य कथयञ्शोभनं फलम् । तस्यतीरे मुनीन्दृष्ट्वा कुर्वाणान्नैगमंजपम्
हर्षेण महताविष्टो बभूव नृपसत्तमः । अवतीर्य हयात्तस्मान्मुनीनामग्रतःस्थितः ॥४१
पृथक्पृथग्ववन्देऽसौ मुनींस्ताञ्शंसितव्रतान् । कृताञ्जलिपुटो भूत्वा दण्डवच्च पुनःपुनः

प्रत्यूचुस्तेऽपि मुनयःप्रसन्ना नृपते ! वयम् ॥४२॥

राजोवाच ।

के भवन्तोऽत्र कथ्यन्तां का चाख्या भवतामपि । किमर्थं संगता यूयं सत्यं वदतमेऽग्रतः

मुनय ऊचुः ।

विश्वेदेवा वयं राजन्स्नानार्थमिह चागताः । माघो निकटमायात एतस्मात्पञ्चमेऽहनि

अद्य चैकादशी राजन्पुत्रदा नाम नामतः । पुत्रं ददात्यसौ तस्मात्पुत्रदाकारिणां नृणाम्

राजोवाच ।

एष वै संशयोऽस्माकं पुत्रस्योत्पादने महान् । यदितुष्टा भवन्तो वै पुत्रो मे दीयतां तदा

मुनयः ऊचुः ।

अद्यैव दिवसे राजन्पुत्रदा नाम वर्तते । एकादशीति विख्यातं क्रियतां व्रतमुत्तमम् ॥

अभिषेकात्ततोऽस्माकं केशवस्य प्रसादतः । अवश्यं तव राजेन्द्र पुत्रप्राप्तिर्भविष्यति

इत्येवं वचनात्तेषां कृतं राज्ञा व्रतोत्तमम् । मुनीनामुपदेशेन पुत्रदाया विधानतः ॥४६॥

द्वादश्यां पारणंकृत्वा मुनीन्नत्वा पुनःपुनः । आजगाम गृहं राजा राज्ञीगर्भमथादधौ ॥

पुत्रोजातःसूतिकाले तेजस्वी पुण्यकर्मणा । पितरं तोषयामास प्रजापालो बभूव सः ॥

तस्माद्राजन्प्रकर्त्तव्यं पुत्रदाव्रतमुत्तमम् । लोकानां तु हितार्थाय तवाग्रे कथितं मया ॥

एकचित्तास्तु ये मर्त्याः कुर्वन्ति पुत्रदाव्रतम् ।

पुत्रान्प्राप्येहलोके तु मृतास्ते स्वर्गगामिनः ॥

पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥ ५३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे पौषशुक्लपुत्रदैकादशी नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

# त्रिचत्वारिंशोऽध्यायः

## माघकृष्णपक्षषट्तिलैकादशीमाहात्म्यवर्णनम्

युधिष्ठिर उवाच।

साधु कृष्ण जगन्नाथ आदिदेव जगत्पते। कथयस्व प्रसादेन कृपां कुरु ममोपरि ॥

माघस्य कृष्णपक्षे तु का वा चैकादशी भवेत्।
किं नाम को विधिस्तस्या एतद्विस्तरतो वद ॥ २॥

श्रीभगवानुवाच।

शृणु त्वं नृपशार्दूल! कृष्णा माघस्य या भवेत्।
षट्तिला नाम विख्याता सर्वपापप्रणाशिनी ॥ ३ ॥
षट्तिलायाः शृणुष्व त्वं कथां पापहरां शुभाम्।
यां पुलस्त्यो मुनिश्रेष्ठो दाल्भ्यंप्रति समुक्तवान् ॥ ४ ॥

दाल्भ्य उवाच।

मर्त्यलोकमनुप्राप्ताःपापं कुर्वन्ति जन्तवः। ब्रह्महत्यादिपापैश्च युक्ता ये गोवधादिभिः ॥
परद्रव्यापहाराश्च परव्यसनमोहिताः। कथं न यान्ति नरकं ब्रह्मंस्तद्ब्रूहि तत्त्वतः ॥६॥
अनायासेन भगवन्दानेनाल्पेन केनचित्। पापं प्रशमनं याति एतन्मे वक्तुमर्हसि ॥ ७ ॥

पुलस्त्य उवाच।

साधुसाधु महाभाग गुह्यमेतत्सुदुर्लभम्। यन्न कस्यचिदाख्यातं विष्णुब्रह्मेन्द्रदैवतैः॥
तदहं कथयिष्यामि त्वया पृष्टो द्विजोत्तम!।
माघमासे तु संप्राप्ते शुचिस्नातो जितेन्द्रियः ॥ ६ ॥
कामक्रोधाभिमानेर्ष्यालोभपैशुन्यवर्जितः। देवदेवं च संस्मृत्य पादौप्रक्षाल्यवारिभिः
भूमावपतितं गृह्यगोमयं तत्र मानवः। तिलान्प्रक्षिप्य कार्पासं पिण्डिकाश्चैव कारयेत्
अष्टोत्तरशतं चैव नात्रकार्या विचारणा। ततो माघे च संप्राप्ते ह्याषाढर्क्षं भवेद्यदि॥

मूलं वा कृष्णपक्षस्यैकादशी नियमांस्ततः । गृह्णीयात्पुण्यकाले चविधानं तत्र मे शृणु
देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः । कृष्णनामानि संकीर्त्य पुनः प्रस्खलितादिषु
रात्रौ जागरणं कुर्यादादौ होमं च कारयेत् । अर्चयेद्देवदेवेशं द्वितीयेऽहि पुनर्हरिम् ॥
चन्दनागुरुकर्पूरैर्नैवेद्यं कृसरं तथा । संस्मृत्य नाम्ना च ततः कृष्णाख्येन पुनः पुनः ॥
कूष्माण्डैर्नारिकेलैश्च ह्यथवा बीजपूरकैः। सर्वाभावेऽपि विप्रेन्द्र ! शस्त पूगफलैर्वृतम्
अर्घं दद्याद्विधानेन पूजयित्वा जनार्दनम् ॥ १७ ॥
कृष्णकृष्णकृपालुस्त्वमगतीनां गतिर्भव । संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ! ॥
नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥
गृहाणार्घ्यं मया दत्तं लक्ष्म्या सह जगत्पते ! ॥१९॥

इत्यर्घमन्त्रः ।

ततस्तु पूजयेद्विप्रमुदकुम्भं प्रदापयेत् । छत्रोपानहवस्त्रैश्च कृष्णो मे प्रीयतामिति ॥२०
कृष्णाधेनुः प्रदातव्या यथाशक्ति द्विजोत्तमे । तिलपात्रं द्विजश्रेष्ठ दद्यात्पात्रविचक्षणः
स्नाने प्राशनके शस्ता तथा कृष्णतिला मुने । तान्प्रदद्यात्प्रयत्नेन यथाशक्तिद्विजोत्तमे !
तिलप्ररोहजाःक्षत्त्रे यावत्सङ्ख्यास्तिला द्विज ! ।
तावद्वर्ष सहस्राणि स्वर्गलोके महीयते ॥ २३ ॥
तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ।
तिलदाता च भोक्ता च षट्तिलाः पापनाशनाः ॥ २४ ॥

युधिष्ठिर उवाच ।

कृष्ण कृष्ण महाबाहो नमस्ते विश्वभावन ! ।
षट्तीलैकादशीभूतं कीदृशं फलमस्ति वै ॥
सोपाख्यानं मम ब्रूहि यदि तुष्टोऽसि यादव ! ॥ २५ ॥

श्रीकृष्ण उवाच ।

शृणु राजन्यथावृत्तं दृष्टं तत्कथयामिते । मर्त्यलोके पुराह्यासीद्ब्राह्मण्येका च नारद !
व्रतचर्यारता नित्यं देवपूजारता सदा । मासोपवासनिरता ममभक्ता च सर्वदा ॥२७॥

कृष्णोपवाससंयुक्ता ममपूजापरायणा। शरीरंक्लेशितं चैव उपवासैर्द्विजोत्तम ! ॥२८

देवानां ब्राह्मणानां च कुमारीणां च भक्तितः।
गृहादिकं प्रयच्छन्ती सर्वकालं महासती ॥ २९ ॥

अतिकृच्छ्ररता सा तु सर्वकालं तु वैद्विज ! न दत्ताभिक्षुकेभिक्षा ब्राह्मणा न च तर्पिताः
ततःकालेन महता मया वै चिन्तितं द्विज !। शुद्धमस्या शरीरं हि व्रतैःकृच्छ्रैर्न संशयः

अर्चितो वैष्णवो लोकः कायक्लेशेन वै तया।
न दत्तमन्नदानं हि येन तृप्तिः परा भवेत् ॥ ३२ ॥
एवं ज्ञात्वा अहं पार्थ ! मर्त्यलोकमुपागतः।
कापालं रूपमास्थाय भिक्षापात्रे च याचिता ॥ ३३ ॥

कस्मात्त्वमागतो ब्रह्मन्क यासि वद मेऽग्रतः। पुनरेव मयाप्रोक्तं देहि भिक्षां च सुन्दरि
तया कोपेन महता मृत्पिण्डस्ताम्रभाजने। क्षिप्तो यावदहं ब्रह्मन्पुनःस्वर्गं गतस्ततः ॥
ततःकालेन महता तापसी सुमहाव्रता। सदेहा स्वर्गमायाता व्रतचर्याप्रभावतः ॥३६॥

मृत्पिण्डिकाप्रदानेन गृहं प्राप्तं मनोरमम्।
संजातं चैव राजर्षे ! धान्यराशिविवर्जितम् ॥३७॥

गृहं यावन्निरीक्षेत न किंचित्तत्र पश्यति। तावद्गृहाद्विनिष्क्रान्ता ममान्ते चागतानृप
क्रोधेन महताविष्टमिदं वचनमब्रवीत्। मया व्रतैश्च कृच्छ्रैश्च उपवासैरनेकशः ॥ ३९ ॥
पूजयाऽऽराधितोदेवःसर्वलोकस्य पालकः। न तत्र दृश्यते किंचिद्गृहे मम जनार्दन ॥
ततश्चोक्तं मया तस्यैगृहं गच्छ महाव्रते। आगमिष्यन्ति सुतरां कौतूहलसमन्विताः ॥

देवपत्न्यो हि द्रष्टुं त्वां विस्मयाभिसमन्विताः।
द्वारं नोद्घाट्य विना षट्तिलापुण्यवाचनात् ॥ ४२ ॥

एवमुक्ता मया सा तु गता वै मानुषी तदा। अत्रान्तरे समायाता देवपत्न्यश्च पाण्डव
ताभिश्च कथितं तत्र त्वां द्रष्टुं हि समागताः। द्वारमुद्घाटयस्वाद्यत्वां प्रपश्यामशोभने

मानुष्युवाच।

यदि मद्दर्शनं कार्यं सत्यंवाच्यं विशेषतः। दत्तं मे षट्तिला पुण्यं द्वारोद्घाटनकारणात्

श्रीकृष्ण उवाच ।

एकापि नावदत्तत्र षट्तीलैकादशीव्रतम् । अन्यया कथितं तत्र द्रष्टव्या मानुषी मया
ततो द्वारं समुद्घाट्य दृष्टाताभिश्च मानुषी । न देवी न च गन्धर्वी नासुरी न च पन्नगी
दृष्टा पूर्वं तथा नारी यादृशीयं नृपर्षभ । देवीनामुपदेशेन षट्तिलाया व्रतं कृतम् ॥४८
मानुष्या सत्यव्रतया भुक्तिमुक्तिफलप्रदम् । रूपकान्ति समायुक्ता क्षणेनसमवाप सा ॥
धनं धान्यं च वस्त्रादि सुवर्णं रौप्यमेव च । भवनं सर्वं सम्पन्नं षट्तिलायाःप्रभावतः

रूपकान्तिसमायुक्ता क्षणेन समपद्यत ।
अतितृष्णा न कर्त्तव्या वित्तशाठ्यं विवर्जयेत् ॥ ५१ ॥
आत्मवित्तानुसारेण तिलान्वस्त्राणि दापयेत् ।
लभते चैवमारोग्यं नरो जन्मनि जन्मनि ॥ ५२ ॥

न दारिद्र्यं न कष्टत्वं न च दौर्भाग्यमेव च । सम्भवेद्वै नृपश्रेष्ठ षट्तिला समुपोषणात्
अनेनविधिना भूप तिलदाता न संशयः । मुच्यते पातकैःसर्वैरनायासेन मानवः ॥५४॥
दानं च विधिवत्पात्रे सर्वपातकनाशनम् । नानर्थः कश्चिन्नायस्तःशरीरे नृपसत्तम ! ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे माघकृष्णाषट्तिलैकादशी माहात्म्यं नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

———

## चतुश्चत्वारिंशोऽध्यायः

### माघशुक्लपक्षजयैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

साधु कृष्ण त्वया प्रोक्तामादिदेवो भवान्प्रभो ।
स्वेदजा अण्डजाश्चैव उद्भिज्जाश्च जरायुजाः ॥ १ ॥
तेषां कर्त्ता विकर्त्ता त्वं पालकः क्षयकारकः ।

माघस्य कृष्णपक्षे तु षट्तिला कथिता त्वया ॥ २ ॥

शुक्ले च का भवेद्देव कथयस्व प्रसादतः । किं नाम कोविधिस्तस्यःकोदेवस्तत्र पूज्यते

श्रीकृष्ण उवाच ।

कथयिष्यामि राजेन्द्र शुक्ले माघस्य या भवेत् ।

जया नामेति विख्याता सर्वपाप हरापरा ॥ ४ ॥

पवित्रा पापहर्त्री च कामदा मोक्षदा नृणाम् ।

ब्रह्महत्यापहन्त्री च पिशाचत्व विनाशिनी ॥ ५ ॥

नैव तस्या व्रतेचीर्णे प्रेतत्वं जायते नृणाम् । नातःपरतरा काचित्पापघ्नी मोक्षदायिनी

एतस्मात्कारणाद्राजन्कर्त्तव्या सा प्रयत्नतः ।

श्रूयतां राजशार्दूल कथा पौराणिकी शुभा ॥ ७ ॥

पद्मजे च पुराणेऽस्या महिमा कथितो मया । एकदानाकलोके वा इन्द्रोराज्यं चकारह

देवास्तत्र सुखेनैव निवसन्ति मनोरमे । पीयूषपाननिरता अप्सरोगण सेविताः ॥ ६ ॥

नन्दनं तु वनं तत्र पारिजातोपसेवितम् ।

रमयन्ति रमन्तेऽत्र अप्सरोभिर्दिवौकसः ॥ १० ॥

एकदा रममाणोऽसौ देवेन्द्रःस्वेच्छया नृप ! । नर्त्तयामास वै हर्षात्पञ्चाशत्कोटिनायकः

गन्धर्वास्तत्र गायन्ति गन्धर्वःपुष्पदन्तकः । चित्रसेनस्तु तत्रैव चित्रसेनसुता तथा ॥

मालिनीति च नाम्ना तु चित्रसेनस्य योषिता ।

मालिन्यास्तु समुत्पन्ना पुष्पवन्ती च नामतः ॥ १३ ॥

पुष्पदन्तस्य पुत्रोऽसौ माल्यवान्नाम नामतः । पुष्पवन्त्याश्च रूपेण माल्यवानतिमोहितः

तयाह्येवं कटाक्षैश्च माल्यवांश्च वशीकृतः । लावण्यरूपसंपन्नं तस्या रूपं निशामय ॥१५

बाहू तस्याश्च कामेन कण्ठपाशौ कृताविव । कर्णायते तु नयने रक्तान्ते घूर्णिते तथा

कर्णौ तु शोभनौ तस्याः कुण्डलाभ्यां नृपोत्तम ! ।

कम्बुग्रीवायुता सैव दिव्याभरणभूषिता ॥१७॥

पीनोन्नतौ कुचौ तस्यास्तौ हेमकलशाविव ।

मध्यं क्षामं च चार्वङ्ग्या मुष्टिग्राह्यमनुत्तमम् ॥ १८ ॥
नितम्बौ विस्तृतौ चास्या विस्तीर्णा जघनस्थली ।
चरणौ शोभमानौ च रक्तोत्पलसमद्युती ॥ १९ ॥
ईदृश्या पुष्पवन्त्या स माल्यवानतिमोहितः । शक्रस्य परितोषाय नृत्यार्थं तौ समागतौ
गायमानौ तु तौ तत्र अप्सरोगणसेवितौ ।
मदनाधिपरीताङ्गौ पुष्पवन्ती च माल्यवान् ॥ २१ ॥
परस्परानुरागेण व्यामोहवशमागतौ । न शुद्धगानं गायेतां चित्तभ्रमसमन्वितौ ॥२२
बद्धदृष्टी तथाऽन्योन्यं कामबाणवशंगतौ । ज्ञात्वा लेखर्षभस्तत्र संगतं मानसं तयोः ॥
तालक्रिया मानलोपात्तथा गीतविसर्जनात् । चिन्तयित्वा तु मघवा ह्यवमानं तथात्मनः
कुपितश्च तयोरर्थे शापं दास्यन्निदं जगौ । धिग्धिग्वां पतितौ मूढावाज्ञाभङ्गकृतौ मम
युवां पिचाशौ भवतां दम्पतीभावधारिणौ ।
मर्त्यलोकमनुप्राप्तौ भुञ्जानौ कर्मणःफलम् ॥ २६ ॥
एवं मघवता शप्तावुभौ दुःखितमानसौ । हिमवन्तं गिरिप्राप्ताविन्द्रशापाद्विमोहितौ ॥
उभौ पिशाचतां प्राप्तौ दारुणं दुःखमेव च । संतप्तमानसौ तत्र हिमकृच्छ्रगतावुभौ ॥
गन्धर्वत्वमप्सरस्त्वं न जानीतो विमोहितौ । पीड्यमानो निदाघेन देहपातकजेन च
न निशायां सुखं शान्ति लभेते कर्मपीडितौ । परस्परं वदमानौ चेरतुर्गिरिगह्वरे ॥३०
पीड्यमानौ तु शीतेन तुषारप्रभवेण तौ । दन्तघर्षं प्रकुर्वाणौ रोमाञ्चितवपुर्धरौ ॥३१॥
ऊचे पिशाचः स तदा तां पत्नीं स्वां पिशाचिकाम् ।
किमनल्पं कृतं पापं दारुणं रोमहर्षणम् ॥ ३२ ॥
येन प्राप्तं पिशाचत्वं स्वेन दुष्कृतकर्मणा । नरकं दारुणं मत्वा पिशाचत्वं च दुःखदम्
तस्मात्सर्वप्रयत्नेन पातकं न समाचरेत् । इति चिन्तापरौ तत्र तावास्तां दुःखकर्शितौ
दैवयोगात्तयोःप्राप्ता माघस्यैकादशी तिथिः ।
जयानामेति विख्याता तिथीनामुत्तमा तिथिः ॥ ३५ ॥
तस्मिन्दिने तु संप्राप्ते तावाहारविवर्जितौ । आसाते तत्र नृपते! जलपानविवर्जितौ ॥

न कृतो जीवघातश्च न पत्रफलभक्षणम्। अश्वत्थस्य समीपे तौ सर्वदा दुःखसंयुतौ ॥
रविरस्तंगतो राजंस्तथैव स्थितयोस्तयोः। प्राप्ता चैव निशा घोरा दारुणा प्राणहारिणी
वेपमानौ ततस्तौ तु ततः सुषुपतुः क्षितौ। परस्परेण संलग्नौ गात्रयोर्भुजयोरपि ॥३६॥

न निद्रां न रतं तत्र न तौ सौख्यमविंदताम्।
एवं तौ राजशार्दूल! शापेनेन्द्रस्य पीडितौ ॥४०॥

इत्थं तयोर्दुःखितयोर्निर्जगाम निशीथिनी। मार्तण्ड उदयं प्राप्तो द्वादशी दिवसागमे ॥

मया तु राजशार्दूल तयोर्मुक्तिर्धृता हृदि।
जयायाः सुव्रतं चीर्णं रात्रौ जागरणं कृतम् ॥ ४२ ॥

तस्माद्व्रतप्रभावाच्च यथाजातं तथा शृणु। द्वादशीदिवसे प्राप्ते तथाचीर्णे जयाव्रते
विष्णोःप्रभावान्नृपते पिशाचत्वं तयोर्गतम्। पुष्पवन्ती माल्यवन्तौ पूर्वरूपौ बभूवतुः
पुरातनस्नेहयुतौ पूर्वालङ्कारधारिणौ। विमानमधिरूढौ तौ गतौ नाके मनोरमे ॥४५॥

देवेन्द्रस्याग्रतो गत्वा प्रमाणं चक्रतुर्मुदा। णामं
तथाविधौ तु तौ दृष्ट्वा मघवा विस्मितोऽब्रवीत् ॥४६॥

इन्द्र उवाच।

वदतं केन पुण्येन पिशाचत्वं हि वां गतम्। ममशापं च संप्राप्तौ केन देवेन मोचितौ

माल्यवानुवाच।

वासुदेवप्रसादेन जयायास्तु व्रतेन च। पिशाचत्वं गतं स्वामिंस्तवभक्ति प्रभावतः ॥
इति श्रुत्वा तु मघवा प्रत्युवाच पुनस्तथा। पवित्रौ पावनौजातौ वन्दनीयौ ममापिच
हरिवासरकर्तारौ विष्णुभक्तिपरायणौ। हरिवासरसँल्लीना ये च कृष्णपरायणाः ॥५०

अस्माकमपि मर्त्यास्ते पूज्याश्चैव न संशयः।
विहरस्व यथासौख्यं पुष्पवन्त्या सुरालये ॥५१॥

श्रीकृष्ण उवाच।

एतस्मात्कारणाद्राजन्कर्त्तव्यो हरिवासरः। जया तु राजशार्दूल ब्रह्महत्यापहारिणी
सर्वदानानि तेनैव सर्वयज्ञा अशेषतः। दत्तानि कारिताश्चैव जयायास्तु व्रतं कृतम् ॥

कल्पकोटिर्भवेत्तावद्वैकुण्ठे मोदते ध्रुवम् । पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥५४

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे माघशुक्लजयैकादशीमाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥

---

## पञ्चचत्वारिंशोऽध्यायः

### फाल्गुनकृष्णपक्षविजयामाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

फाल्गुनस्यासितेपक्षे किं नामैकादशी भवेत् । कथयस्व प्रसादेन वासुदेव ममाग्रतः

श्रीकृष्ण उवाच ।

नारदःपरिपप्रच्छ ब्रह्माणं कमलासनम् । फालगुनस्यासितेपक्षे विजयानाम नामतः ॥
तस्याः पुण्यं द्विजश्रेष्ठ ! कथयस्व प्रसादतः ॥२॥

ब्रह्मोवाच ।

शृणु नारद वक्ष्यामि कथां पापहरां पराम् । यन्नकस्यचिदाख्यातं मयैतद्विजयाव्रतम्
पुरातनं व्रतं ह्येतत्पवित्रं पापनाशनम् । जयं ददाति विजया नृपाणां वै न संशयः ॥४
पुरा रामो वनं यातो वर्षाण्येव चतुर्दश । न्यवसत्पञ्चवट्यां तु सहसीतः सलक्ष्मणः ॥
तत्रैव वसतस्तस्य रामस्य विजयात्मनः । रावणेनहृता लौल्याद्भार्यासीता यशस्विनी
तेन दुःखेन रामोऽपि मोहमभ्यागतस्तदा । भ्रमञ्जटायुषमथो ददर्श विगतायुषम् ॥७॥
कबन्धो निहतःपश्चाद्भ्रमताऽरण्यमध्यतः । सुग्रीवेण समं तस्य सखित्वं समपद्यत ॥
वानराणामनीकानि रामार्थं संगतानि च । ततो हनुमता दृष्टा लङ्कोद्याने तु जानकी
रामसंज्ञापनं तस्यै दत्तं कर्म महत्कृतम् ।
पुनः समेत्य रामेण सर्वं तत्र निवेदितम् ॥ १० ॥
अथ श्रुत्वा रामचन्द्रो वाक्यंचैव हनूमतः । सुग्रीवानुमतेनैव प्रस्थानं समरोचयत् ॥

सौमित्रे केन पुण्येन तीर्यते वरुणालयः। अगाधो नितरामेष यादोभिश्च समाकुलः।

उपायं नैव पश्यामि येनासौ सुतरो भवेत् ॥ १२ ॥

लक्ष्मण उवाच।

आदिदेवस्त्वमेवासि पुराणपुरुषोत्तमः। बकदाल्भ्यो मुनिश्चात्र वर्तते द्वीपमध्यतः॥

अस्मात्स्थानाद्योजनार्धमाश्रमस्तस्य राघव!।

अन्ये च ब्राह्मणास्तत्र बहवो रघुनन्दन ॥ १४ ॥

तं पृच्छ गत्वा राजेन्द्र पुराणमृषिपुङ्गवम्।

इति वाक्यं ततः श्रुत्वा लक्ष्मणस्यातिशोभनम् ॥ १५ ॥

जगाम राघवो द्रष्टुं बकदाल्भ्यं महामुनिम्। प्रणनाम मुनिं मूर्ध्ना रामो विष्णुमिवामरः

ज्ञात्वा मुनिस्ततो रामं पुराणं पुरुषोत्तमम्। केनापि कारणेनैव प्रविष्टो मानुषीं तनुम्

उवाच स ऋषिस्तुष्टः कुतो राम तवागमः ॥ १८ ॥

राम उवाच।

त्वत्प्रसादादहं विप्र तीरं नदनदीपतेः।

आगतोऽस्मि ससैन्योऽत्र लङ्कां जेतुं सराक्षसाम् ॥ १६ ॥

भवतश्चानुकूलत्वात्तीर्यतेऽब्धिर्यथा मया। तमुपायं वद मुने प्रसादं कुरु साम्प्रतम् ॥

एतस्मात्कारणादेव द्रष्टुं त्वाहमिहागतः। रामस्य वचनं श्रुत्वा बकदाल्भ्यो महामुनिः

उवाच सुप्रसन्नात्मा रामं राजीवलोचनम्। कर्तव्यमद्य ते राम व्रतानां व्रतमुत्तमम् ॥

कृतेन येन सहसा विजयस्ते भविष्यति।

लङ्कां जित्वा राक्षसांश्च स्वच्छां कीर्तिमवाप्स्यसि ॥ २३ ॥

एकाग्रमानसो भूत्वा व्रतमेतत्समाचर। फाल्गुनस्यासिते पक्षे विजयैकादशीभवेत् ॥

तस्या व्रतेन हेराम विजयस्ते भविष्यति। निःसंशयं समुद्रं त्वं तरिष्यसि स वानरः

विधिस्तु श्रूयतां राजन्व्रतस्यास्य फलप्रदः। दशम्यान्दिवसे प्राप्तेकुम्भमेकं तु कारयेत्

हैमं वा राजतं वाऽपि ताम्रं वाप्यथ मृण्मयम्।

स्थापयेच्छोभितञ्चैव जलपूर्णं सपल्लवम् ॥ २७ ॥

सप्तधान्यान्यधस्तस्य यवानुपरि विन्यसेत् । तस्योपरि न्यसेद्देवं हैमं नारायणं प्रभुम्
एकादशी दिने प्राप्ते प्रातःस्नानं समाचरेत् । निश्चलं स्थापयेत्कुम्भंकण्ठमाल्यानुलेपनैः
पूगीफलैर्नालिकेरैःपूजयेच्चविशेषतः । गन्धैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैरपि ॥ ३० ॥
कुंभाग्रे तद्दिनं राम नीयते सत्कथादिभिः । रात्रौ जागरणंचैव तस्याग्रे कारयेद्बुधः ॥
प्रकाशयेद् घृतदीपमखण्डव्रतहेतवे । द्वादशीदिवसे प्राप्ते मार्तण्डस्योदये सति ॥३२॥

नीत्वा कुम्भं जलोद्देशे नद्याःप्रस्रवणे तथा ।
ताडगे स्थापयित्वा तं पूजयित्वा यथाविधि ॥ ३३ ॥

दद्यात्स देवं तं कुम्भं ब्राह्मणे वेदपारगे । कुम्भेन सह राजेन्द्र महादानानि दापयेत् ॥
अनेन विधिना राम यूथपैःसह संगतः । कुरु व्रतं प्रयत्नेन विजयस्ते भविष्यति ॥३५॥

ब्रह्मोवाच ।

इति श्रुत्वा ततो रामो यथोक्तमकरोत्तदा । कृतेव्रते स विजयी बभूव रघुनन्दनः ॥३६॥
प्राप्तासीता जितालङ्का पौलस्त्यो निहतो रणे । अनेन विधिना पुत्र ये कुर्वन्तिनराव्रतम्
इहलोके जयप्राप्तिः परलोकस्तथाक्षयः । एतस्मात्कारणात्पुत्र कर्तव्यं विजयाव्रतम् ॥

विजयायाश्च माहात्म्यं सर्वकिल्बिषनाशनम् ।
पठनाच्छ्रवणाच्चैव वाजपेयफलं लभेत् ॥ ३९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे फाल्गुनकृष्णविजयामाहात्म्यं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः

### फाल्गुनशुक्लपक्षामलक्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

माहात्म्यंविजयायाश्च श्रुतं कृष्णमहाफलम् । फाल्गुनस्यार्जुनेपक्षेयन्नाम्नी तां वदाधुना

श्रीकृष्ण उवाच ।

धर्मपुत्र महाभाग शृणुवक्ष्यामि तेऽधुना । योक्ता पृष्टेन मान्धात्रा वसिष्ठेन महात्मना
फाल्गुनस्य विशेषेण विशेषःकथितो नृप । आमलकीव्रतं पुण्यं विष्णुलोकफलप्रदम् ॥

आमलक्यास्तले गत्वा जागरं तत्र कारयेत् ।
कृत्वा जागरणं रात्रो गोसहस्र फलंलभेत् ॥ ४ ॥

मान्धातोवाच ।

आमलकी कदाह्येषा उत्पन्ना द्विजसत्तम । एतत्सर्वं ममाचक्ष्व परं कौतूहलं हि मे ॥

कस्मादियं पवित्रा च कस्मात्पाप प्रणाशिनी ।
कस्माज्जागरणं कृत्वा गोसहस्र फलं लभेत् ॥ ६ ॥

वसिष्ठ उवाच ।

कथयामि महाभाग यथेयमभवत्क्षितौ । आमलकीमहावृक्षः सर्वपापप्रणाशनः ॥ ७ ॥
एकार्णवे पुरा जाते नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे प्रनष्टोरगराक्षसे ॥ ८ ॥
तत्र देवादि देवेशःपरमात्मा सनातनः । जगाम ब्रह्मपरममात्मनःपदमव्ययम् ॥ ९ ॥
ततोऽस्य जाग्रतो ब्रह्ममुखाच्छशिसमप्रभः । ष्ठीवनाद्बिन्दुरुत्पन्नः स भूमौनिपपात ह

तस्माद् विन्दोः समुत्पन्नःस्वयं धात्री नगो महान् ।
शाखाप्रशाखाबहुलः फलभारेण नामितः ॥ ११ ॥

सर्वेषांचैव वृक्षाणामादिरोहःप्रकीर्तितः । ब्रह्मणाऽथ ततःपश्चात्संसृष्टाश्च इमा प्रजाः ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगान् । असृजद्भगवान्देवो महर्षींश्च तथामलान् ॥ १३ ॥
आजग्मुस्तत्र देवास्ते यत्र धात्री हरिप्रिया । तां दृष्ट्वा ते महाभागपरं विस्मयमागताः

न जानीम इमं वृक्षं चिन्तयन्तोऽभिसंस्थिताः ।
एवं चिन्तयतां तेषां वागुवाचाशरीरिणी ॥ १५ ॥

आमलकी नगोह्येष प्रवरो वैष्णवोमतः । अस्य संस्मरणादेव लभेद्गोदानजं फलम् ॥

स्पर्शनाद् द्विगुणं पुण्यं त्रिगुणं भक्षणात्तथा ।
तस्मात्सर्वप्रयत्नेन सेव्या आमलकी सदा ॥ १७ ॥

सर्वपापहरा प्रोक्ता वैष्णवी पापनाशिनी ।
तस्या मूलेस्थितो विष्णुस्तदूर्ध्वे च पितामहः ॥ १८ ॥
स्कन्धे च भगवान्रुद्रः संस्थितः परमेश्वरः । शाखासु मुनयः सर्वे प्रशाखासु च देवताः
पर्णेषु चासते देवाः पुष्पेषु मरुतस्तथा । प्रजानां पतयः सर्वे फलेष्वेव व्यवस्थिताः ॥२०॥
सर्वदेवमयीह्येषा धात्री च कथिता मया । तस्मात्पूज्यतमाह्येषा विष्णुभक्तिपरायणैः

ऋषय ऊचुः ।

को भवान्नहि जानीमः कस्मात्कारणतां गतः ।
देवो वा यदि वा चान्यः कथयस्व यथातथम् ॥ २२ ॥

वागुवाच ।

यः कर्ता सर्वभूतानां भुवनानां च सर्वशः । विदुषामपि दुष्प्रेक्ष्यस्सोऽहं विष्णुः सनातनः
तच्छ्रुत्वा देवदेवस्य भाषितं ब्रह्मणः सुताः । अनादिनिधनं देवं स्तोतुं तत्र प्रचक्रमुः ॥
नमो भूतात्मभूताय आत्मने परमात्मने । अच्युताय नमो नित्यमनन्ताय नमोनमः ॥
दामोदराय कवये यज्ञेशाय नमोनमः ॥ २६ ॥
एवं स्तुतस्तु ऋषिभिस्तुतोष भगवान्हरिः । प्रत्युवाच महर्षींस्तानभीष्टं किं ददामिवः

ऋषय ऊचुः ।

यदि तुष्टोऽसि भगवन्नस्माकं हितकाम्यया ।
व्रतं किंचित्समाख्याहि स्वर्गमोक्षफलप्रदम् ॥ २८ ॥
धनधान्यप्रदं पुण्यमात्मनस्तुष्टिकारकम् । अल्पायासं बहुफलं व्रतानामुत्तमंव्रतम् ॥
कृतेन येन देवेश ! विष्णुलोके महीयते ॥ २९ ॥

विष्णुरुवाच ।

फाल्गुने शुक्लपक्षे तु पुष्येण द्वादशी यदि । भवेत्सा च महापुण्या महापातकनाशिनी
विशेषस्तत्र कर्त्तव्यः शृणुध्वं द्विजसत्तमाः । आमलकी च संप्राप्य जागरं तत्र कारयेत्
सर्वपापविनिर्मुक्तो गोसहस्रफलं लभेत् । एतद्वः कथितं विप्रा व्रतानां व्रतमुत्तमम् ॥
अर्चयित्वाऽच्युतं तस्यां विष्णुलोकान्न मुच्यते ॥ ३२ ॥

ऋषय ऊचुः ।

व्रतस्यास्य विधिं ब्रूहि परिपूर्णं कथं भवेत् ।
के मन्त्राःके नमस्कारा देवता का प्रकीर्तिता ॥ ३३ ॥
कथं दानं कथं स्नानं कश्च पूजाविधिःस्मृतः। अर्घार्चनस्यमन्त्रंतु कथयस्वयथातथम्

विष्णुरुवाच ।

श्रूयतां यो विधिः सम्यग्व्रतस्यास्य द्विजर्षभाः ।
एकादश्यां निराहारः स्थित्वा चैव परेऽहनि ॥ ३५ ॥
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ! ।
इति कृत्वा तु नियमं दन्तधावनपूर्वकम् ॥ ३६ ॥
नालपेत्पतितांश्चौरांस्तथापाषण्डिनोनरान् । दुर्वृत्तान्भिन्नमर्यादान्गुरुदारप्रधर्षकान् ॥
अपराह्णे ततःस्नानं विधिना कारयेद्बुधः । नद्यां तडागे कूपे वा गृहे वा नियतात्मवान्
मृत्तिकालम्भनं पूर्वं ततःस्नानं च कारयेत् । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्तेवसुन्धरे
मृत्तिके ! हर मे पापं यन्मया दुष्कृतं कृतम् ॥४०॥

इति मृत्तिकामन्त्रः ।

त्वमम्बु सर्वभूतानां जीवनं तनुरक्षकम् । स्वेदजोद्भिज्जजातीनां रसानां पतये नमः ॥
स्नातोऽहं सर्वतीर्थेषु ह्रदप्रस्रवणेषु च । नदीषु देवखातेषु इदं स्नानं तु मे भवेत् ॥४२

इति स्नानमन्त्रः ।

जामदग्न्यं मुनिंचैव कारयित्वा हिरण्मयम् । माषकस्य सुवर्णस्य तदर्धार्धेन वा पुनः
गृहमागत्य पूजायाः पूजाहोमं तु कारयेत् । ततश्चामलकीं गच्छेत्सर्वोपस्करसंयुतः ॥
आमलकीं ततो गत्वा परिशोध्य समन्ततः । स्थापयेत्सततं कुम्भमव्रणं मन्त्रपूर्वकम् ॥
पञ्चरत्नसमोपेतं दिव्यगन्धाधिवासितम् । छत्रोपानद्युगोपेतं सितचन्दनचर्चितम् ॥
स्रग्दामलम्बितग्रीवं सर्वधूपविधूपितम् । दीपमालाकुलं कुर्यात्सर्वतःसुमनोहरम् ॥४७
तस्योपरि न्यसेत्पात्रं दिव्यलाजैः प्रपूरितम् ।
पात्रोपरि न्यसेद्देवं जामदग्न्यं महाप्रभम् ॥ ४८ ॥

विशोकाय नमःपादौ जानुनी विश्वरूपिणे। उग्राय च ततोऽप्यूरूकटीदामोदराय च॥
उदरं पद्मनाभायउरःश्रीवत्सधारिणे। चक्रिणे वामबाहुं च दक्षिणं गदिने नमः॥ ५०॥
वैकुण्ठाय नमःकण्ठमास्यं यज्ञमुखाय वै। नासां विशोकनिधये वासुदेवाय चाक्षिणी
ललाटं वामनायेति रामायेति भ्रुवौ नमः। सर्वात्मने तु तच्छीर्षं नम इत्यभिपूजयेत्

इति पूजामन्त्रः

ततो देवाधिदेवाय अर्घंचैव प्रदापयेत्। फलेन चैव शुभ्रेण भक्ति युक्तेन चेतसा॥५३॥
नमस्ते देवदेवेश जामदग्न्य नमोऽस्तु ते। गृहाणार्घ्यमिमं दत्तमामलक्यायुतो हरे!॥

अर्घ्य मन्त्रः

ततो जागरणं कुर्याद्भक्तियुक्तेन चेतसा। नृत्यैर्गीतैश्च वादित्रैर्धर्माख्यानैःस्तवैरपि॥५५
वैष्णवैश्च तथाऽऽख्यानैः क्षपयेत्सर्वशर्वरीम्।
प्रदक्षिणां ततः कुर्याद्भक्त्या वै विष्णुनामभिः॥५६॥
अष्टाधिकं शतंचैव अष्टाविंशतिरेव वा। ततःप्रभाते समये कृत्वा नीराजनं हरेः॥५७॥
ब्राह्मणं पूजयित्वा तु सर्वं तस्मै निवेदयेत्। जामदग्न्यघटं तत्र वस्त्रयुग्ममुपानहौ॥
जामदग्न्यस्वरूपेण प्रीयतां मम केशवः।
ततश्चामलकीं स्पृष्ट्वा कृत्वा चैव प्रदक्षिणाम्॥ ५९॥
स्नानं कृत्वा विधानेन ब्राह्मणान्भोजतेत्ततः। ततश्च स्वयमश्नीयात्कुटुम्बेन समावृतः
एवं कृतेन यत्पुण्यं तत्सर्वं कथयामि ते। सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम्॥
सर्वयज्ञाधिकं चैव लभते नात्र संशयः। एतद्वःसर्वमाख्यातं व्रतानामुत्तमं व्रतम्॥६२
एतावदुक्त्वा देवेशस्तत्रैवान्तरधीयत। ते चापि ऋषयःसर्वे चक्रुःसर्वमशेषतः॥ ६३॥
तथा त्वमपि राजेन्द्र कर्तुमर्हसि सत्तम!। व्रतमेतद्दुराधर्षं सर्वपापप्रमोचनम्॥६४॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे फाल्गुनशुक्लामलक्येकादशी माहात्म्यं नाम षट्चत्वारिंशोऽध्यायः॥४६॥

———

# सप्तचत्वारिंशोऽध्यायः

## चैत्रकृष्णपक्षपापमोचन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

फाल्गुनस्य सितेपक्षे श्रुताचामलकी तथा । चैत्रस्य कृष्णपक्षे तु किं नामैकादशीभवेत्

श्रीकृष्ण उवाच ।

शृणु राजेन्द्र ! वक्ष्यामि आख्यानं पापनाशनम् ।
यल्लोमशोऽब्रवीत्पृष्टो मान्धात्रा चक्रवर्तिना ॥ २ ॥

मान्धातोवाच ।

भगवञ्छ्रोतुमिच्छामि लोकानां हितकाम्यया । चैत्रस्य प्रथमे पक्षे का नामैकादशीभवेत्
को विधिः किं फलं तस्याः कथयस्व प्रसादतः ॥३॥

लोमश उवाच ।

चैत्रमास्यसिते पक्षे नाम्नावैपापमोचिनी । एकादशी समाख्याता पिशाचत्वविनाशिनी
शृणु तस्याः प्रवक्ष्यामि कामदां सिद्धिदां नृप ।
कथां विचित्रां शुभदां पापघ्नीं धर्मदायिनीम् ॥५॥
पुरा चैत्ररथोद्देशे ह्यप्सरोगणसेविते । वसन्तसमये प्राप्ते षट्पदाकुलिते वने ॥ ६ ॥
गन्धर्वकन्या वादित्रे रमन्ते सहकिन्नरैः । पाकशासनमुख्याश्च क्रीडन्ति त्रिदिवौकसः
नापरं सुखदं किंचिद्विना चैत्ररथाद्वनम् । तस्मिन्वने तु मुनयस्तपन्ति बहुलं तपः ॥८
मेधाविनामानमृषिं तत्रस्थं ब्रह्मचारिणम् । अप्सरास्तं मुनिवरं मोहनायोपचक्रमे ॥
मञ्जुघोषेति विख्याना भावं तस्य वितन्वती ।
क्रोशमात्रं स्थिता तस्य भयादाश्रम सन्निधौ ॥ १० ॥
गायन्ती मधुरं साधु पीडयन्ती विपञ्चिकाम् ।
गायन्तीं तामथालोक्य पुष्पचन्दनसेविताम् ॥ ११ ॥

कामोऽपि विजयाकाङ्क्षी शिवभक्तान्मुनीश्वरान् ।
तस्याः शरीरे संवासमकरोन्मनसः सुतः ॥१२॥
कृत्वा भ्रुवौ धनुष्कोटिं गुणं कृत्वा कटाक्षकम् ।
मार्गणौ नयने कृत्वा पक्ष्मयुक्ते यथाक्रमम् ॥ १३ ॥
कुचौ कृत्वा पटकुटीं विजयायोपचक्रमे । मञ्जुघोषा भवत्तस्य कामस्यैव वरूथिनी ॥
मेधाविनं मुनिं दृष्ट्वासापि कामेनपीडिता । यौवनोद्भिन्नदेहोऽसौ मेधाव्यपिविराजते
सितोपवीतसहितो दृष्टःस्मर इवापरः। मेधावी वसते आसौ च्यवनस्याश्रमे शुभे ॥
मञ्जुघोषा स्थितं तत्र दृष्ट्वा सा मुनिपुङ्गवम् । मदनस्य प्रभावात्सा मन्दमन्दमगायत
रणद्वलयसंयुक्तां शिञ्जन्नूपुरमेखलाम् । गायन्तीं तां तथाभूतां विलोक्य मुनिपुङ्गवः ॥
मदनेन ससैन्येन नीतो मोहवशं बलात् । मञ्जुघोषा समागत्य मुनिं दृष्ट्वा तथाविधम्
हावभावकटाक्षैस्तं मोहयामास चाङ्गना ।
अधः संस्थाप्य वीणां सा सस्वजे तं मुनीश्वरम् ॥ २० ॥
चलितेव लतावृक्षं वातवेगेन कम्पितम् । सोऽपि रेमे तया सार्धं मेधावी मुनिपुङ्गवः ॥
तस्मिन्नेव ततो दृष्ट्वा तस्यास्तं देहमुत्तमम् । शिवतत्त्वं गतं तस्य कामतत्त्ववशं गतः
न निशां न दिनं सोऽपि रमञ्जानाति कामुकः । बहुवर्षो गतःकालो मुनेराचार लोपतः
मञ्जुघोषा देवलोकगमनायोपचक्रमे । गच्छन्ती तं प्रत्युवाच रमन्तं मुनिसत्तमम् ॥
आदेशो दीयतां ब्रह्मन्स्वदेशगमनाय मे ॥ २४ ॥

मेधाव्युवाच ।

अद्यैव त्वं समायाता प्रदोषादौ वरानने । यावत्प्रभात सन्ध्यास्यात्तावत्तिष्ठ ममान्तिके
इति श्रुत्वा मुनेर्वाक्यं भयभीता बभूव सा । पुनर्वै रमयामास तमृषिं नृपसत्तम ! ॥
मुनेः शापभयाद्भीता बहुलान्परिवत्सरान् । वर्षाणां पञ्चपञ्चाशन्नवमासान्दिनत्रयम् ॥
सा रेमे मुनिना तस्य निशार्धमिव चाभवत् ।
सा तं पुनरुवाचाथ तस्मिन्काले गते मुनिम् ॥
आदेशो दीयतां ब्रह्मन्गन्तव्यं स्वगृहे मया ॥ २८ ॥

मेधाव्युवाच ।

प्रभातमधुनाचास्ते श्रूयतां वचनं मम । सन्ध्यांयावच्च कुर्वेऽहं तावत्त्वं वै स्थिराभव

इति वाक्यं मुनेः श्रुत्वा जातानन्दसमाकुला ।
स्मितं कृत्वा तु सा किंचित्प्रत्युवाच शुचिस्मिता ॥ ३० ॥

अप्सरा उवाच ।

कियत्प्रमाणा विप्रेन्द्र ! तव सन्ध्या गताऽनघ ! ।
मयि प्रसादं कृत्वा तु गतःकालो विचार्यताम् ॥ ३१ ॥

इति तस्यावचः श्रुत्वा विस्मयोत्फुल्ललोचनः । गतकालस्य विप्रेन्द्रःप्रमाणमकरोत्तदा
समाश्च सप्तपञ्चाशद्गतास्तस्य तया सह । चुक्रोध स ततस्तस्यै ज्वालामाली बभूव ह

नेत्राभ्यां विस्फुलिङ्गान्स मुञ्चमानोऽतिकोपनः ।
कालरूपां तु तां दृष्ट्वा तपसः क्षयकारिणीम् ॥ ३४ ॥

दुःखार्जितं क्षयं नीतं तपोदृष्ट्वा तयासह । सकम्पोष्ठो मुनिस्तत्र प्रत्युवाचाकुलेन्द्रियः
तां शशापाथ मेधावी त्वं पिशाची भवेति च । धिक्त्वां पापे दुराचारे कुलटे पातकप्रिये
तस्य शापेन सा दग्धा विनयावनतास्थिता । उवाच वचनं सुभ्रू प्रसादं वाञ्छतीमुनिम्
प्रसादं कुरु विप्रेन्द्र शापस्यानुग्रहं कुरु । सतां संगो हि भवति वचोभिःसप्तभिःपदैः
त्वयासह मम ब्रह्मन्नीता वै बहुवत्सराः । एतस्मात्कारणात्स्वामिन्प्रसादं कुरु सुव्रत

मुनिरुवाच ।

श्रृणु मे वचनं भद्रे शापानुग्रहकारकम् । किं करोमि त्वया पापे क्षयंनीतं महत्तपः ॥
चैत्रस्य कृष्णपक्षे तु भवेदेकादशी शुभा । पापमोचिनिका नाम सर्वपापक्षयङ्करी ॥

तस्या व्रते कृते शुभ्रे पिशाचत्वं प्रयास्यति ।
इत्युक्त्वा सोऽपि मेधावी जगाम पितुराश्रमम् ॥ ४२ ॥

तमागतं समालोक्य च्यवनःप्रत्युवाचतम् । किमेतद्विहितं पुत्र ! त्वया पुण्यक्षयःकृतः

मेधाव्युवाच ।

पातकं वै कृतं तात रमिता चाप्सरा मया । प्रायश्चित्तं ब्रूहि तात येन पापक्षयो भवेत्

च्यवन उवाच ।

चैत्रस्य चासिते पक्षे नाम्ना वै पापमोचिनी ।

अस्या व्रते कृते पुत्र ! पापराशिः क्षयं व्रजेत् ॥ ४५ ॥

इतिश्रुत्वा पितुर्वाक्यं कृतं तेन व्रतोत्तमम् । गतं पापं क्षयं तस्य तपोयुक्तो बभूव सः

साप्येवंमञ्जुघोषा च कृत्वैतद्व्रतमुत्तमम् । पिशाचत्वाद्विनिर्मुक्तापापमोचिनिकाव्रतात्

दिव्यरूपधरा सा वै गता नाके वराप्सरा ॥ ४७ ॥

श्रीकृष्ण उवाच ।

पापमोचिनिकां राजन्ये कुर्वन्ति नरोत्तमाः ।

तेषां पापं च यत्किंचित्तत्सर्वं च क्षयं व्रजेत् ॥४८॥

पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् । ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ॥४६

व्रतस्य चास्य करणात्पापमुक्ता भवन्ति ते । वहुपुण्यप्रदं ह्येतत्करणाद्व्रतमुत्तमम् ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे चैत्रकृष्णैकादशीपापमोचिनी नाम सप्तचत्वारिंशोऽध्यायः ॥४७॥

---

## अष्टचत्वारिंशोऽध्यायः

### चैत्रशुक्लपक्षकामदैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

वासुदेव नमस्तुभ्यं कथयस्व ममाग्रतः । चैत्रस्य शुक्लपक्षे तु किं नामैकादशी भवेत् ॥

श्रीकृष्ण उवाच ।

शृणुष्वैकमना राजन्कथां पुण्यां पुरातनीम् । वसिष्ठो यामकथयत्प्राग्दिलीपाय पृच्छते

दिलीप उवाच ।

भगवञ्छ्रोतुमिच्छामि कथयस्वप्रसादतः । चैत्रमासि सितेपक्षे किं नामैकादशीभवेत्

वसिष्ठ उवाच ।

साधु पृष्टं त्वया राजन्कथयामि तवाग्रतः । चैत्रस्य शुक्लपक्षे तु कामदा नाम नामतः ॥
एकादशी पुण्यतमा पापेन्धनदवानलः । शृणुराजन्कथामेतां पापघ्नीं पुण्यदायिनीम् ॥
पुरा नागपुरे रम्ये हेमरत्नविभूषते । पुण्डरीकमुखानागा निवसन्ति महोत्कटाः ॥६॥
तस्मिन्पुरे पुण्डरीको राजा राज्यं चकार सः ।
गन्धर्वैः किन्नरैश्चैव अप्सरोभिश्च सेव्यते ॥ ७ ॥
वराप्सरास्तु ललिता गन्धर्वो ललितस्तथा । उभौ रागेणसंरक्तौ दम्पतीकामपीडितौ
रेमाते स्वगृहे रम्ये धनधान्ययुते तदा । ललितायाश्च हृदये पतिर्वसति सर्वदा ॥ ९ ॥
हृदये तस्य ललिता नित्यं वसति भामिनी ।
एकदा पुण्डरीकोऽथ क्रीडते सदसि स्थितः ॥१०॥
गातं गानं प्रकुरुते ललितोदयितां विना । पदवन्धस्खलज्जिह्वो बभूव ललितां स्मरन्
मनोभावं विदित्वास्य कर्कटो नागसत्तमः । पदवन्धच्युतिं तस्य पुण्डरीके न्यवेदयत्
श्रुत्वा कर्कोटकवचः पुण्रीके भुजङ्गराट् । क्रोधसंरक्तनयनो बभूवातिभयङ्करः ॥ १३ ॥
शशाप ललितं तत्र गायन्तं मदनातुरम् । राक्षसो भव दुर्बुद्धे क्रव्यादः पुरुषादकः ॥१४
यतःपत्नीवशोपेतो गायमानो ममाग्रतः । वचनात्तस्य राजेन्द्र रक्षोरूपो बभूव सः ॥१५
रौद्राननो विरूपाक्षो दृष्टमात्रो भयङ्करः । बाहू योजनविस्तीर्णौ मुखं कन्दरसन्निभम्
चन्द्रसूर्यनिभे नेत्रे ग्रीवा पर्वतसन्निभा । नासारन्ध्रे तु विवरे अधरौ योजनायतौ ॥
शरीरं तस्य राजेन्द्र ! उत्थितं योजनाष्टकम् ।
ईदृशो राक्षसो भूत्वा भुञ्जानः कर्मणः फलम् ॥ १८ ॥
ललिता तु तथालोक्य स्वपतिं विकृताकृतिम् । चिन्तयामास मनसा दुःखेनमहतार्दिता
किं करोमि क्व गच्छामि पतिः शापेन पीडितः ।
इति संस्मृत्य संस्मृत्य मनसा शर्म नालभत् ॥ २० ॥
चचार पतिनासार्धं ललिता गहनेवने । बभ्राम विपिने दुर्गे कामरूपी स राक्षसः ॥२१
निर्घृणःपापनिरतो विरूपःपुरुषादकः । न सुखं लभते रात्रौ न दिवा पापपीडितः ॥

ललिता दुःखिताऽतीव पतिं दृष्ट्वा तथाविधम् । बभ्राम तेनसार्धं सा रुदती गहनेवने ॥

दृष्ट्वाऽऽश्रमपदं रम्यं मुनिं संशान्तविग्रहम् ।
शीघ्रं जगाम ललिता नमस्कृत्याग्रतः स्थिता ॥ २४ ॥
तां दृष्ट्वा स मुनिः प्राह दुःखितां हि दयापरः ।
का त्वं कस्मादिहायाता सत्यं वद ममाग्रतः ॥ २५ ॥

ललितोवाच ।

वीरधन्वेति गन्धर्वःसुतातस्य महात्मनः । ललितां नाम मां विद्धि पत्यर्थमिह चागताम्
भर्ता मे पापदोषेण राक्षसोऽभून्महामुने ।
रौद्ररूपो दुराचारस्तं दृष्ट्वा नास्ति मे सुखम् ॥ २७ ॥
साम्प्रतं शाधि मां ह्यन्यत्कृत्यं तद्वद प्रभो । येन पुण्येन विप्रेन्द्र राक्षसत्वाद्विमुच्यते

ऋषिरुवाच ।

चैत्रमासस्य रम्भोरु शुक्लपक्षोऽस्ति साम्प्रतम् । कामदैकादशी नाम पापघ्नी ललितेपरा
कुरुष्व तद्व्रतं भद्रे विधिपूर्वं मयोदितम् । अस्य व्रतस्य यत्पुण्यं तत्स्वभर्त्रे प्रदीयताम्
दत्तेपुण्ये क्षणात्तस्य शापदोषःप्रयास्यति । इति श्रुत्वा मुनेर्वाक्यंललिता हर्षिताऽभवत्
उपोष्यैकादशीं राजन्द्वादशीदिवसे तथा । विप्रस्यैव समीपे तद्वासुदेवस्य चाग्रतः ॥
वाक्यमुवाच ललिता स्वपत्युस्तारणाय वै ।
मया तु तद्व्रतं चीर्णं कामदाया उपोषणम् ॥ ३३ ॥
तस्य पुण्यप्रभावेण गच्छत्वस्य पिशाचता । ललितावचनादेव वर्त्तमानोऽपि तत्क्षणे
गतपापःस ललितो दिव्यदेहो बभूव ह । राक्षसत्वं गतं तस्य प्राप्ता गन्धर्वता पुनः ॥
हेमरत्नसमाकीर्णो रेमे ललितया सह । विमानवरमारूढौ पूर्वरूपाधिकौ च तौ ॥३६
दम्पती अत्यशोभेतां कामदायाः प्रभावतः । इति ज्ञात्वा नृपश्रेष्ठ कर्तव्यैषा प्रयत्नतः ॥
लोकानां तु हितार्थाय तवाग्रे कथिता मया ॥ ३८ ॥

श्रीकृष्ण उवाच ।

ब्रह्महत्यादि पापघ्नी पिशाचत्वविनाशिनी । नातः परतरा काचित्त्रैलोक्ये सचराचरे

पठनाच्छ्रवणाद्राजन्वाजपेयफलं लभेत् ॥ ३१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापतिनारद-
संवादे चैत्रशुक्लकामदामाहात्म्यं नामाष्टचत्वरिंशोऽध्यायः ॥ ४८ ॥

---

## ऊनपञ्चाशत्तमोऽध्यायः

### वैशाखकृष्णपक्षवरूथिन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

वैशाखस्यासितेपक्षे किं नामैकादशी भवेत् । महिमानं कथय मे वासुदेव नमोऽस्तु ते

श्रीकृष्ण उवाच

सौभाग्यदायिनी राजन्निहलोके परत्र च । वैशाखकृष्णपक्षे तु नाम्ना चैव वरूथिनी
वरूथिन्या व्रतेनैव सौख्यं भवति सर्वदा । पापहानिश्च भवति सौभाग्यप्राप्तिरेव च

दुर्भगा या करोत्येनां सा स्त्री सौभाग्यमाप्नुयात् ।
लोकानां चैव सर्वेषां भुक्तिमुक्तिप्रदायिनी ॥ ४ ॥

सर्वपापहरा नृणां गर्भवासनिकृन्तनी । वरूथिन्या व्रतेनैव मान्धाता स्वर्गतिं गतः ॥
धुन्धुमारादयश्चान्ये राजानो बहवस्तथा । ब्रह्मकपालनिर्मुक्तो बभूव भगवान्भवः ॥
दशवर्षसहस्राणि तपस्तप्यति यो नरः । रविग्रहे कुरुक्षेत्रे स्वर्णभारं ददाति यः ॥७॥
तत्तुल्यं फलमाप्नोति वरूथिन्या व्रतं चरन् । श्रद्धावान्यस्तु कुरुते वरूथिन्या व्रतं नरः
वाञ्छितं लभते सोऽपि इहलोके परत्र च । पवित्रा पावनी ह्येषा महापातकनाशिनी ।
भुक्तिमुक्तिप्रदा चैव कर्तॄणां नृपसत्तम । अश्वदानान्नृपश्रेष्ठ गजदानं विशिष्यते ॥१०॥

गजदानाद् भूमिदानं तिलदानं ततोऽधिकम् ।
तस्माच्च स्वर्णदानं वा अन्नदानं ततोऽधिकम् ॥ ११ ॥

अन्नदानात्परं दानं न भूतं न भविष्यति । पितृदेवमनुष्याणां तृप्तिरन्नेन जायते ॥१२॥

तत्समं कविभिःप्रोक्तं कन्यादानं नृपोत्तम । धेनुदानं च तत्तुल्यमित्याह भगवान्स्वयम्
प्रोक्तेभ्यः सर्वदानेभ्यो विद्यादानं विशिष्यते ।
तत्फलं समवाप्नोति नरः कृत्वा वरूथिनीम् ॥ १४ ॥
कन्यावित्तेन जीवन्ति ये नराःपापमोहिताः । पुण्यक्षयात्ते गच्छन्तिनिरयं यातनामयम्
तस्मात्सर्वप्रयत्नेन न ग्राह्यं कन्यकाधनम् ।
यश्च गृह्णाति लोभेन कन्यां क्रीत्वा च तद्धनम् ॥१६॥
सोऽन्यजन्मनि राजेन्द्र ! ओतुर्भवति निश्चितम् ।
कन्यां पुण्येन यो दद्याद्यथाशक्ति स्वलङ्कृताम् ॥ १७ ॥
तत्पुण्यसङ्ख्यां गदितुं चित्रगुप्तो न शक्नुयात् ।
तत्तुल्यं फलमाप्नोति नरः कृत्वा वरूथिनीम् ॥ १८ ॥
कांस्यं मांसं मसूरांश्च चणकान्कोद्रवांस्तथा । शाकं मधुपरान्नं च पुनर्भोजनमैथुने ॥
वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत् । द्यूतं क्रीडां च निद्रां च ताम्बूलं दन्तधावनम्
परापवादं पैशुन्यं स्तेयं हिंसां तथा रतिम् । क्रोधं चैवानृतंवाक्यमेकादश्यां विवर्जयेत्
कांस्यं मांसं सुरां क्षौद्रं तैलं पतितभाषणम् ।
व्यायामं च प्रवासं च पुनर्भोजनमैथुनम् ॥ २२ ॥
वृषपृष्ठं मसूरान्नं द्वादश्यां परिवर्जयेत् । अनेन विधिना राजन्विहितायैंर्वरूथिनी ॥२३
सर्वपापक्षयं कृत्वा दद्यात्प्रान्तेऽक्षयांगतिम् । रात्रौ जागरणं कृत्वा पूजितो मधुसूदनः
सर्वपापविनिर्मुक्तास्ते यान्ति परमांगतिम् । तस्मात्सर्वप्रयत्नेन कर्तव्या पापभीरुभिः
क्षपारितनयाद्भीतो नरःकुर्याद्वरूथिनीम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ २७ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे वैशाखकृष्णवरूथिन्येकादशीमाहात्म्यं नामैकोनपञ्चाशत्तमोऽध्यायः ॥

———

# पञ्चाशत्तमोऽध्यायः

## वैशाखशुक्लपक्षमोहिन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

वैशाखशुक्लपक्षे तु किन्नामैकादशी भवेत् । किं फलं को विधिस्तत्र कथयस्व जनार्दन

श्रीकृष्ण उवाच ।

इदमेव पुरापृष्टं रामचन्द्रेण धीमता । वसिष्ठं प्रति राजेन्द्र यत्त्वं मामनुपृच्छसि ॥ २ ॥

राम उवाच ।

भगवञ्छ्रोतुमिच्छामि व्रतानामुत्तमंव्रतम् । सर्वपापक्षयकरं सर्वदुःखनिकृन्तनम् ॥३॥

मया दुःखानि भुक्तानि सीताविरहजानि तु ।

ततोऽहं भयभीतोऽस्मि पृच्छामि त्वां महामुने ! ॥ ४ ॥

वसिष्ठ उवाच ।

साधुपृष्टं त्वया राम तवैषा नैष्ठिकीमतिः । त्वन्नामग्रहणेनैव पूतो भवति मानवः ॥

तथाऽपि कथयिष्यामि लोकानां हितकाम्यया । पवित्रं पावनानांचव्रतानामुत्तमंव्रतम्

वैशाखस्य सिते पक्षे राम ! चैकादशी भवेत् ।

मोहिनी नाम सा प्रोक्ता सर्वपापहरा परा ॥ ७ ॥

मोहजालात्प्रमुच्यन्ते पातकानां समूहतः । अस्या व्रतप्रभावेण सत्यं सत्यं वदाम्यहम्

अतः कारणतो राम ! कर्तव्यैषा भवादृशैः ।

पातकानां क्षयकारी महादुःखविनाशनी ॥ ९ ॥

शृणुष्वैकमना राम कथां पापहारां पराम् । यस्याः श्रवणमात्रेण महापापं प्रणश्यति ॥

सरस्वत्यास्तटे रम्ये पुरी भद्रावती शुभा । द्युतिमान्नाम नृपतिस्तत्र राज्यं करोति वै ॥

चन्द्रवंशोद्भवो नाम्ना धृतिमान्सत्यसङ्गरः । तत्र वैश्यो निवसति धनधान्यसमृद्धिमान्

धनपाल इतिख्यातः पुण्यकर्मप्रवर्त्तकः । प्रपाकूपमठारामतडागगृहकारकः ॥ १३ ॥

विष्णुभक्तिरतःशान्तस्तस्यासन्पञ्चपुत्रकाः। सुमना द्युतिमांश्चैव मेधावी सुकृतस्तथा॥
पञ्चमो धृष्टबुद्धिश्च महापापरतः सदा। परस्त्रीसङ्गनिरतो विटगोष्ठीविशारदः॥ १५॥
द्यूतादि व्यसनासक्तः परस्त्रीरतिलालसः। न च देवार्चने बुद्धिर्नपितृन्नद्विजान्प्रति॥
अन्यायवर्ती दुष्टात्मा पितुर्द्रव्यक्षयङ्करः। अभक्ष्यभक्षकः पापी सुरापानेरतःसदा॥१७

वेश्याकण्ठे क्षिप्तबाहुर्भ्रमन्दुष्टश्चतुष्पथे।
पित्रा निष्काशितो गेहात्परित्यक्तश्च बान्धवैः॥ १८॥
स्वदेहभूषणान्येव क्षयं नीतानि तेन वै।
गणिकाभिः परित्यक्तो निन्दतश्च धनक्षयात्॥ १९॥

ततश्चिन्तापरो जातो वस्त्रहीनःक्षुधार्दितः। किं करोमि क्व गच्छामि केनोपायेन जीव्यते
तस्करत्वं समारब्धं तत्रैव नगरे पितुः। गृहीतो राजपुरुषैर्मुक्तश्च पितृगौरवात्॥२१॥
पुनर्बद्धःपुनस्त्यक्तः पुनर्बद्धः स वै भटैः। धृष्टबुद्धिर्दुराचारो निबध्य निगडैर्दृढैः॥२२॥

कशाघातैस्ताडितश्च पीडितश्च पुनः पुनः।
न स्थातव्यं हि मन्दात्मंस्त्वया मद्देशगोचरे॥ २३॥
एवमुक्त्वा ततो राज्ञा मोचितो दृढबन्धनात्।
निर्जगाम भयात्तस्य गतोऽसौ गहनं वनम्॥ २४॥

क्षुत्तृषा पीडितश्चायमितश्चेतश्च धावति। सिंहवन्निजघानासौ मृगशूकरचित्रलान्॥
आमिषाहारनिरतो वने तिष्ठति सर्वदा। करे शरासनं कृत्वा निषङ्गं पृष्ठसंगतम्॥२६॥

अरण्यचारिणो हन्ति पक्षिणश्च चतुष्पदान्।
चकोरांश्च मयूरांश्च कङ्कतित्तिरिमूषकान्॥ २७॥

एतानन्यान्हिनस्त्यन्धो धृष्टबुद्धिस्तु निर्घृणः। पूर्वजन्मकृतैः पापैर्निमग्नःपापकर्दमे॥

दुःखशोकसमाविष्टः पीड्यमानो दिवानिशम्।
कौण्डिन्यस्याश्रमपदं प्राप्तः पुण्यागमात्कचित्॥२९॥
माधवे मासि जाह्नव्यां कृतस्नानं तपोधनम्।
आससाद धृष्टबुद्धिः शोकभारेण पीडितः॥३०॥

तद्वस्त्रबिन्दुस्पर्शेन गतपापो हताशुभः।

कौण्डिन्यस्याग्रतः स्थित्वा प्रत्युवाच कृताञ्जलिः ॥३१॥

धृष्टबुद्धिरुवाच ।

भो भो ब्रह्मन्द्विजश्रेष्ठ दयांकृत्वा ममोपरि । येन पुण्यप्रभावेण मुक्तिर्भवति तद्वद ॥३२॥

कौण्डिन्य उवाच ।

शृणुष्वैकमनाः श्रुत्वा येन पापक्षयस्तव । वैशाखस्य सितेपक्षे मोहिनी नाम विश्रुता ॥

एकादशीव्रतं तस्याःकुरु मद्वाक्यनोदितः । मेरुतुल्यानि पापानि क्षयं नयति देहिनाम्

बहुजन्मार्जितान्येषा मोहिनी समुपोषिता । इतिवाक्यं मुनेःश्रुत्वाधृष्टबुद्धिः प्रसन्नधीः

व्रतं चकार विधिवत्कौण्डिन्यस्योपदेशतः ।

कृते व्रते नृपश्रेष्ठ ! गतपापो बभूव सः ॥३६॥

दिव्यदेहस्ततो भूत्वा गरुडोपरि संस्थितः । जगाम वैष्णवं लोकं सर्वोपद्रववर्जितम्

इतीदृशं रामचन्द्र ! उत्तमं मोहिनीव्रतम् । नातःपरतरं किंचित्त्रैलोक्ये सचराचरे ॥३८

श्रीकृष्ण उवाच ।

यज्ञादि तीर्थदानानि कलां नार्हन्तिषोडशीम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-
नारदसंवादे वैशाखशुक्ले मोहिन्येकादशी नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

———

## एकपञ्चाशत्तमोऽध्यायः

### ज्येष्ठकृष्णपक्षापरानामैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

ज्येष्ठस्य कृष्णपक्षे तु किं नामैकादशी भवेत् । श्रोतुमिच्छामिमाहात्म्यंतद्वदस्व जनार्दन

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया राजँल्लोकानां हितकाम्यया । बहुपुण्यप्रदा ह्येषा महापातकनाशिनी
अपरा नाम राजेन्द्र अपरा पुत्रदायिनी । लोके प्रसिद्धतां याति अपरां यस्तु सेवते ॥
ब्रह्महत्याभिभूतोऽपि गोत्रहाभ्रूणहा तथा । परापवादवादी च परस्त्रीरसिकोऽपि च
अपरासेवनाद्राजन्विपाप्मा भवति ध्रुवम् । कूटसाक्ष्यं कूटमानं तुलाकूटं करोति यः
कूटवेदं पठेद्यस्तु कूटशास्त्रं तथैव च । ज्योतिषी गणकः कूटः कूटायुर्वेदिको भिषक् ॥६
कूटसाक्ष्यसमायुक्तो विज्ञेया नरकौकसः । अपरासेवनाद्राजन्पापैर्मुक्ता भवन्ति ते ॥

क्षत्रियः क्षात्रधर्मं यस्त्यक्त्वा युद्धात्पलायते ।
स याति नरकं घोरं स्वीयधर्मबहिष्कृतः ॥ ८ ॥
अपरा सेवनात्सोऽपि पापं त्यक्त्वा दिवं व्रजेत् ।
विद्यावान्यःस्वयं शिष्यो गुरुनिन्दां करोति च ॥९॥
स महापातकैर्युक्तो निरयं याति दारुणम् ।
अपरासेवनात्सोऽपि सद्गतिं प्राप्नुयान्नरः ॥ १० ॥

महिमानमपरायाःश्रृणु राजन्वदाम्यहम् । मकरस्थे रवौ माघे प्रयागे यत्फलं नृणाम्
काश्यां यत्प्राप्यते पुण्यमुपरागे निमज्जनात् । गयायां पिण्डदानेनपितॄणां तृप्तिदो यथा

सिंहस्थिते देवगुरौ गौतम्यां स्नातको नरः ।
कन्यागते गुरौ राजन्कृष्णवेणीनिमज्जनात् ॥ १३ ॥

यत्फलं समवाप्नोति कुम्भकेदारदर्शनात् । बदर्याश्रमयात्रायां तत्तीर्थसेवनादपि ॥१४
यत्फलं समवाप्नोति कुरुक्षेत्रे रविग्रहे । गजाश्वहेमदानेन यज्ञं कृत्वा सदक्षिणम् ॥
तादृशं फलमाप्नोति अपराव्रतसेवनात् । प्रसद्यःसूतां गां दत्त्वा सुवर्णं वसुधां तथा
नरो यत्फलमाप्नोति अपराया व्रतेन तत् । पापद्रुमकुठारीयं पापेन्धनदवानलः ॥१७
पापान्धकारतरणिः पापसारङ्गकेसरी । बुद्बुदा इव तोयेषु पुत्तिका इव जन्तुषु ॥१८॥
जायन्ते मरणायैव एकादश्याव्रतं विना । अपरां समुपोष्यैव पूजयित्वा त्रिविक्रमम् ॥

सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।

लोकानां च हितार्थाय तवाग्रे कथितं मया । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे ज्येष्ठकृष्णापरैकादशीनामैकपञ्चशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः

### ज्येष्ठशुक्लनिर्जलैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

अपरायाश्च माहात्म्यं श्रुतं सर्वं जनार्दन । ज्येष्ठस्य शुक्लपक्षे तु स्याद्या तां वद मानद

श्रीकृष्ण उवाच ।

एनां वक्ष्यति धर्मात्मा व्यासः सत्यवतीसुतः । सर्वशास्त्रार्थतत्त्वज्ञो वेदवेदाङ्गपारगः

युधिष्ठिर उवाच ।

श्रुता मे मानवा धर्मा वासिष्ठाश्च श्रुता मया । द्वैपायन यथावत्त्वं वैष्णवान्वक्तुमर्हसि

श्रीवेदव्यास उवाच ।

श्रुतास्तु मानवा धर्मा वैदिकाश्च श्रुतास्त्वया । कलौ युगे नशक्यन्ते ते वै कर्तुं नराधिप

सुखोपायमल्पधनमल्पक्लेशं महाफलम् ।
पुराणानां च सर्वेषां सारभूतं महामते ! ॥ ५ ॥

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । द्वादश्यां तु शुचिर्भूत्वापुष्पैः संपूज्य केशवम्
अन्नं भुञ्जीत सत्कृत्य पश्चाद्विप्रपुरःसरम् । सूतकेऽपि न भोक्तव्यंनाशौचे च जनाधिप
यावज्जीवं व्रतमिदं कर्तव्यं पुरुषर्षभ । स्वर्गतिं प्राप्तुमिच्छद्भिरत्र नैवास्ति संशयः ॥

अपि पापा दुराचाराः पापिष्ठा धर्मवर्जिताः ।
एकादश्यां न भुञ्जाना न ते यान्ति यमान्तिकम् ॥ ६ ॥

इति तद्वचनं श्रुत्वा कम्पितोऽश्वत्थपत्रवत् । भीमसेनो महाबाहुर्नत्वोवाच गुरुम्प्रति ॥

भीमसेन उवाच।

पितामह महाबुद्धे शृणु मे परमं वचः। युधिष्ठिरश्च कुन्ती च तथा द्रुपदनन्दिनी ॥११॥
अर्जुनो नकुलश्चैव सहदेवस्तथैव च। एकादश्यां न भुञ्जन्ति कदाचिदपि सुव्रताः ॥
ते मां ब्रुवन्ति वै नित्यं मा भुङ्क्ष्व त्वं वृकोदर!।
अहं तानब्रवं तात बुभुक्षा दुःसहा मम ॥ १३ ॥
दानं दास्यामि विधिवत्पूजयिष्यामि केशवम्।
भीमसेनवचः श्रुत्वा व्यासो वचनमब्रवीत् ॥ १४ ॥

व्यास उवाच।

यदि स्वर्गमभीष्टं तेन नरकं दुष्टमेव च। एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ॥१५

भीमसेन उवाच।

पितामह! महाबुद्धे! कथयामि तवाग्रतः। एकभक्ते न शक्नोमि उपवासे कुतः प्रभो ॥
वृको हि नाम यो वह्निःस सदा जठरे मम। अतिवेलं यदाऽश्नामि तदा समुपशाम्यति
नैकं शक्नोम्यहं कर्तुमुपवासं महामुने!॥
येनैव प्राप्यतेस्वर्गस्तत्कर्त्तास्मि यथातथम्। तदेकंवदनिश्चित्ययेन श्रेयोऽहमाप्नुयाम्

व्यास उवाच।

वृषस्थे मिथुनस्थे वा यदा चैकादशी भवेत्। ज्येष्ठमासे प्रयत्नेन सोपोष्योदकवर्जिता
गण्डूषाचमनं वारि वर्जयित्वोदकं बुधः। उपभुञ्जीत नैवेह व्रतभङ्गोऽन्यथा भवेत् ॥
उदयादुदयं यावद्वर्जयित्वोदकं नरः। श्रूयतां समवाप्नोति द्वादशद्वादशीफलम् ॥ २१॥
ततःप्रभातेविमले द्वादश्यांस्नानमाचरेत्। जलं सुवर्णं दत्त्वा च द्विजातिभ्यो यथाविधि
भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी। एवं कृते च यत्पुण्यंभीमसेन शृणुष्व तत्
संवत्सरे तु याश्चैव एकादश्यो भवन्ति हि।
तासां फलमवाप्नोति ह्यत्र मे नास्ति संशयः ॥ २४ ॥
इति मां केशवः प्राह शङ्खचक्रगदाधरः। सर्वान्परित्यज्य पुमान्मामेकं शरणं व्रजेत् ॥
एकादश्यां निराहारस्ततः पापात्प्रमुच्यते।

द्रव्यशुद्धिः कलौ नास्ति संस्कारः स्मार्त्त एव च ॥ २६ ॥
वैदिकस्तु कुतश्चापि प्राप्ते दुष्टे कलौ युगे। किंतु ते बहुनोक्तेन वायुपुत्र! पुनः पुनः ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। एकादश्यां सिते पक्षे ज्येष्ठे मास्युदकं विना ॥

पुण्यं फलमवाप्नोति तच्छृणुष्व वृकोदर!।
संवत्सरे तु या प्रोक्ताः शुक्ला कृष्णा वृकोदर! ॥ २९ ॥
उपोसिता हि सर्वाः स्युरेकादश्यो न संशयः।
धनधान्यप्रदा पुण्या पुत्रारोग्यशुभप्रदा ॥ ३० ॥

उपोषिता नरव्याघ्र इति सत्यं ब्रवीमि ते। यमदूता महाकायाः करालाः कृष्णरूपिणः
दण्डपाशधरा रौद्रा नोपसर्पन्ति तं परम्। पीताम्बरधराः सौम्याश्चक्रहस्ता मनोजवाः

अन्तकाले नयन्त्येते वैष्णवान्वैष्णवीं पुरीम्।
तस्मात्सर्वप्रयत्नेन उपोष्योदकवर्जिता ॥ ३३ ॥

जलधेनुं तदा दत्त्वा सर्वपापैः प्रमुच्यते। ततस्त्वमस्यां कौन्तेय सोपवासोऽर्चनं हरेः
कुरु सर्वप्रयत्नेन सर्वपापप्रशान्तये। स्वप्ने न मेऽपराधोऽस्ति दन्तरागतयाऽपिवा ॥
भोक्ष्येऽपरेऽह्नि देवेश ह्यशनं वासराद्धरेः। इत्युच्चार्य ततो मन्त्रमुपवासपरो भवेत् ॥३६॥
सर्वपापविनाशाय श्रद्धादमसमन्वितः। मेरुमन्दरमात्राघं स्त्रिया पुंसा च यत्कृतम् ॥

सर्वं तद्भस्मतां याति एकादश्याः प्रभावतः।
न शक्नुवन्ति ये दातुं जलधेनुं नराधिप! ॥ ३८ ॥
सकाञ्चनः प्रदातव्यो घटको वस्त्रसंयुतः।
तोयस्य नियमं योऽस्यां कुरुते वै स पुण्यभाक् ॥ ३९ ॥

फलं कोटिसुवर्णस्य यामे यामे श्रुतं फलम्। स्नानं दानं जपं होमं यदस्यां कुरुते नरः
तत्सर्वं चाक्षयं प्राप्तमेतत्कृष्णप्रभाषितम्। किं वापरेण धर्मेण निर्जलैकादशीं विना ॥
उपोष्य सम्यग्विधिवद्वैष्णवं पदमाप्नुयात्। सुवर्णमन्नं वासो वा यदस्यां सम्प्रदीयते

तदस्य कुरुशार्दूल! सर्वं चाप्यक्षयं भवेत्।
एकादश्यां दिने योऽन्नं भुङ्क्ते पापं भुनक्ति सः ॥ ४३ ॥

इह लोके स चाण्डालो मृतः प्राप्नोति दुर्गतिम् ।
ये च दास्यन्ति दानानि द्वादश्यां समुपोषिताः ॥ ४४ ॥
ज्येष्ठमासे सितेपक्षे प्राप्स्यन्ति परमं परम् । ब्रह्महा मद्यपः स्तेनो गुरुद्वेषी सदानृती ॥
मुच्यन्ते पातकैः सर्वैर्निर्जला यैरुपोषिता । विशेषं शृणु कौन्तेय निर्जलैकादशी दिने ॥
यत्कर्त्तव्यं नरैः स्त्रीभिर्दानं श्रद्धासमन्वितैः ।
जलशायी च संपूज्यो देया धेनुस्तथाम्मयी ॥ ४७ ॥
प्रत्यक्षा वा नृपश्रेष्ठ घृतधेनुरथापि वा । दक्षिणाभिः सुपुष्टाभिर्मिष्टान्नैश्च पृथग्विधैः
तोषणीयाः प्रयत्नेन द्विजा धर्मभृतांवर ! । तुष्टा भवन्ति वै विप्रास्तैस्तुष्टैर्मोक्षदो हरिः
आत्मद्रोहः कृतस्तैर्हि यैरेषा न ह्युपोषिता ।
पापात्मानो दुराचारा दुष्टास्ते नात्रसंशयः ॥ ५० ॥
कुलानां शतमागामि अतीतानां तथाशतम् । आत्मना सह तैर्नीतं वासुदेवस्य मन्दिरम्
शान्तैर्दान्तैर्दानपरैरर्चयद्भिस्तथाहरिम् । कुर्वद्भिर्जागरं रात्रौ यैरेषा समुपोषिता ॥५२॥
अन्नं वस्त्रं तथा गावो जलं शय्यासनं शुभम् ।
कमण्डलुस्तथा छत्त्रं दातव्यं निर्जलादिने ॥ ५३ ॥
उपानहौ यो ददाति पात्रभूते द्विजोत्तमे । ससौवर्णेन यानेन स्वर्गलोके महीयते ॥५४॥
यश्चेमां शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत् ।
तावुभावाप्नुतः स्वर्गं नात्र कार्या विचारणा ॥ ५५ ॥
यत्फलं सन्निहत्यायां राहुग्रस्ते दिवाकरे । कृत्वा श्राद्धं लभेन्मर्त्यस्तदस्या श्रवणादपि
नियमश्च प्रकर्त्तव्यो दन्तधावनपूर्वकम् । एकादश्यां निराहारो वर्जयिष्यामि वै जलम्
केशवप्रीणनार्थाय अन्यदाचमनादृते । द्वादश्यां देवदेवेशः पूजनीयस्त्रिविक्रमः ॥ ५८॥
गन्धैर्धूपैस्तथा पुष्पैर्वासोभिः प्रियदर्शनैः । पूजयित्वा विधानेन मन्त्रमेतमुदीरयेत् ॥
देवदेव ! हृषीकेश ! संसारार्णवतारक ! । उदकुम्भप्रदानेन नय मां परमां गतिम् ॥६०
ज्येष्ठे मासि तु वै भीम ! या शुक्लैकादशी शुभा ।
निर्जला समुपोष्यात्र जलकुम्भान्सशर्करान् ॥ ६१ ॥

प्रदाय विप्रमुखेभ्यो मोदते विष्णुसन्निधौ ।
ततः कुम्भाः प्रदातव्या ब्राह्मणानां च भक्तितः ॥ ६२ ॥
भोजयित्वा ततो विप्रान्स्वयं भुञ्जीत तत्परः ।
एवं यः कुरुते पूर्णां द्वादशीं पापनाशिनीम् ॥ ६३ ॥
सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् । ततः प्रभृति भीमेन कृता ह्येकादशी शुभा ॥
पाण्डवद्वादशी नाम्ना लोके ख्याता बभूव ह ॥ ६४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे ज्येष्ठशुक्लनिर्जलैकादशीमाहात्म्यं नाम द्विपञ्चाशत्तमोऽध्यायः ॥५२॥

---

## त्रिपञ्चाशत्तमोऽध्यायः

### आषाढकृष्णपक्षयोगिन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

आषाढकृष्णपक्षे तु किंनामैकादशी भवेत् । कथयस्व प्रसादेन वासुदेव ! ममाग्रतः ॥१

श्रीकृष्ण उवाच ।

व्रतानामुत्तमं राजन्कथयामि तवाग्रतः । सर्वपापक्षयकरं सर्वमुक्तिप्रदायकम् ॥ २ ॥
आषाढस्यासिते पक्षे योगिनी नाम नामतः । एकादशी नृपश्रेष्ठ महापातकनाशिनी ॥
संसारार्णवमग्नानां पोतभूता सनातनी । जगत्त्रये सारभूता योगिनी व्रतकारिणाम्
कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् ।
अलकायां राजराजः शिवभक्तिपरायणः ॥ ५ ॥
तस्यासीत्पुष्पबटुको हेममालीति नामतः । तस्य पत्नी सुरूपा च विशालाक्षीतिनामतः
स तस्यां चासक्तमनाः कामपाशवशंगतः । मानसात्पुष्पनिचययमानीय स्वगृहे स्थितः
पत्नी प्रेमरसासक्तो न कुबेरालयं गतः । कुबेरो देवसदने करोति शिवपूजनम् ॥ ८ ॥

मध्याह्नसमये राजन्पुष्पागमसमीक्षकः । हेममाली स्वभवने रमते कान्तया सह ॥ ९ ॥

यक्षराट् प्रत्युवाचाथ कालातिक्रमकोपितः ।
कस्मान्नायाति भोयक्षा ! हेममाली दुरात्मवान् ।
निश्चयः क्रियतामस्य इत्युवाच पुनः पुनः ॥ १० ॥

यक्षा ऊचुः ।

वनिताकामुको गेहे रमते स्वेच्छया नृप । तेषां वाक्यं समाकर्ण्य कुबेरः कोपपूरितः ॥

आह्वयामास तं तूर्णं वटुकं हेममालिनम् ।
ज्ञात्वा कालात्ययं सोऽपि भयव्याकुललोचनः ॥ १२ ॥

अस्नात एव आगत्य कुबेरस्याग्रतः स्थितः । तं दृष्ट्वा धनदः क्रुद्धः कोपसंरक्तलोचनः

प्रत्युवाच रुषाविष्टः कोपप्रस्फुरिताधरः ॥ १३ ॥

धनद उवाच ।

आः पाप दुष्टदुर्वृत्त कृतवान्देवहेलनम् । अष्टादशकुष्ठचितो वियुक्तः कान्तया तथा ॥

अस्मात्स्थानादपध्वस्तो गच्छस्व प्रमथाधम ! ।
इत्युक्ते वचने तस्य तस्मात्स्थानात्पपात सः ॥ १५ ॥

महादुःखाभिभूतश्च कुष्ठैः पीडितविग्रहः । न सुखं दिवसे तस्य न निद्रां लभते निशि
छायायां पीडिततनुर्निदाघेऽत्यन्तपीडितः । शिवपूजाप्रभावेण स्मृतिस्तस्य न लुप्यते
पातकेनाभिभूतोऽपि पूर्वं कर्मस्मरत्यसौ । भ्रममाणस्ततो गच्छन्हिमाद्रिं पर्वतोत्तमम्

तत्रापश्यन्मुनिवरं मार्कण्डेयं तपोनिधिम् ।
यस्यायुर्विद्यते राजन्ब्रह्मणो वयसा समम् ॥ १९ ॥

ववन्दे चरणौ तस्य दूरतः पापकर्मकृत् । मार्कण्डेयो मुनिवरो दृष्ट्वा तं कम्पितं तथा

परोपकरणार्थाय समाहूयेदमब्रवीत् ॥ २१ ॥

मार्कण्डेय उवाच ।

कस्मात्कुष्ठाभिभूतस्त्वं कुतो निन्द्यतरो ह्यसि ।
इत्युक्तः स प्रत्युवाच मार्कण्डेयं महामुनिम् ॥२२॥

हेममाल्युवाच ।

राजराजस्यानुचरो हेममालीति नामतः । मानसात्पद्मनिचयमानीय प्रत्यहं मुने ! ॥२३
शिवपूजनवेलायां कुवेराय समर्पये । एकस्मिन्दिवसे चैव कालश्चाविदितो मया ॥२४॥
पत्नी सौख्यप्रसक्तेन शोकव्याकुलचेतसा । ततः क्रुद्धेन शप्तोऽस्मि राजराजेन वै मुने

कुष्ठाभिभूतः संजातो वियुक्तः कान्तया तया ।

अधुना तव सान्निध्यं प्राप्तोऽस्मि शुभकर्मणा ॥ २६ ॥

सतांस्वभावसिद्धिरं परोपकरणेक्षमम् । इति ज्ञात्वा मुनिश्रेष्ठ मां प्रशाधि कृतागसम्

मार्कण्डेय उवाच ।

त्वया सत्यमिह प्रोक्तं नासत्यं भाषितं यतः । अतो व्रतोपदेशं ते कथयामि शुभप्रदम्
आषाढे कृष्णपक्षे तु योगिनीव्रतमाचर । अस्यव्रतस्य पुण्येन कुष्ठं यास्यति वैध्रुवम्
इति वाक्यमृषेः श्रुत्वा दण्डवत्पतितो भुवि । उत्थापितः स मुनिना बभूवातीवहर्षितः
मार्कण्डेयोपदेशेन व्रतं तेन कृतं यथा। अष्टादशैव कुष्ठानि गतानि तस्य सर्वशः ॥३१॥
मुनेर्वाचा ततः सम्यग्व्रते चीर्णेऽभवत्सुखी । ईदृग्विधं नृपश्रेष्ठ कथितं योगिनीव्रतम् ॥
अष्टाशीति सहस्राणि द्विजान्भोजयते तु यः । तत्समं फलमाप्नोति योगिनीव्रतकृन्नरः
महापापप्रशमनं महापुण्यफलप्रदम् । पठनाच्छ्रवणान्मर्त्यः सर्वपापैः प्रमुच्यते ॥ ३४॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे आषाढकृष्णयोगिन्येकादशीमाहात्म्यं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

---

## चतुःपञ्चाशत्तमोऽध्यायः

### आषाढशुक्लपक्षशयन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

आषाढस्य सितेपक्षें का चैवैकादशी भवेत् । किंनामकोविधिस्तस्याएतद्विस्तरतोवद

श्रीकृष्ण उवाच ।

कथयामि महापुण्यां स्वर्गमोक्षप्रदायिनीम् । शयनीं नाम नाम्नेति सर्वपापहरां पराम् ॥
यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । सत्यं सत्यं मया प्रोक्तं नातःपरतरं नृणाम्
पापिनां पापनाशाय सृष्टा धात्रा महोत्तमा ।
अतः परा न राजेन्द्र! वर्त्तते मोक्षदायिनी ॥ ४ ॥
एतस्मात्कारणाद्राजञ्छ्रूयतां गतिरुत्तमा । भवेन्नराणां श्रोतॄणांकथायाः श्रवणादपि
ते सदा वैष्णवा राजन्ममभक्तिपरायणाः । आषाढे वामनश्चैव पूज्यते परमेश्वरः ॥६॥
वामनः पूजितो येन कमलैः कमलेक्षणः । आषाढस्य सितेपक्षे शयन्याख्य दिने तथा ॥
येनार्चितं जगत्सर्वं त्रयो देवाः सनातनाः । कृता चैकादशी येन हरिवासरमुत्तमम् ॥

युधिष्ठिर उवाच ।

संशयोऽस्ति महान्मेऽत्र श्रूयतां पुरुषोत्तम । कथं सुप्तोऽसि देवेश कथं च बलिमाश्रितः
कथं च भूमौ संवेशः किं कुर्वन्ति जनाःपरे । एतद्वद महाप्राज्ञ संशयोऽस्ति महान्मम ॥

श्रीकृष्ण उवाच ।

श्रूयतां राजशार्दूल कथा पापहरा परा । यस्याःश्रवणमात्रेण सर्वपापक्षयो भवेत् ॥
बलिनामा पूर्वमासीद्दैत्यस्त्रेतायुगे नृप । पूजयंश्चैव मां नित्यं मद्भक्तो मत्परायणः ॥
यज्ञैस्तु विधिवद्दैत्यो यजते मां सनातनम् । भक्त्या च परया राजन्यज्ञकृत्व्रतकृत्तथा ॥
परं विचार्य बहुधा मघोना चैव सूक्तिभिः । गुरुणा दैवतैः सार्धं बहुधापूजितोऽप्यहम्
ततो वामनरूपेण अवतारे च पञ्चमे । अत्युग्ररूपेण तदा सर्वब्रह्माण्डरूपिणा ॥ १५ ॥
वाक्छलेन जिता दैत्याः सत्यमाश्रित्य संस्थितः ।
शुक्रस्तं वारयामास यन्नारायण इत्ययम् ॥१६॥
याचिता वसुधा राजन्सार्धत्रयपदी मया । संकल्पोदकमात्रेतु करे तेनैव चार्पिते ॥
रूपमीदृग्विधं राजंस्तदा श्रृणु मया कृतम् । भूलोके चरणौ न्यस्य भुवर्लोके तु जानुनी
स्वर्लोके च कटिं न्यस्य महर्लोके तथोदरम् । जनलोके चहृदयं तपोलोके तु कण्ठकम्
सत्यलोके मुखं स्थाप्य मस्तकं च तदूर्ध्वकम् । चन्द्रसूर्यग्रहाश्चैव नक्षत्राणि तथैव च

देवाः सेन्द्राश्च नागाश्च यक्षगन्धर्वं किन्नराः ।
स्तुवन्तो वेदसंभूतैः सूक्तैश्च विविधैस्तथा ॥ २१ ॥

करे गृहित्वा च बलिं त्रिपदैः पूरितामही । अर्धं च तस्य पृष्ठे च पदंन्यस्तं मया तदा
गतो रसातलं राजन्दानवो मम पूजकः । क्षिप्तोऽधो दानवश्चैव किमकुर्वं ततः परम् ॥
विनयेनानतोऽसौ वै सुप्रसन्नो जनार्दनः । आषाढशुक्लपक्षे तु शयनी हरिवासरः ॥
तस्यामेका च मूर्तिर्मे बलिमाश्रित्य तिष्ठति । द्वितीया शेषपृष्ठे वै क्षीरसागरमध्यतः
स्वपित्येव महाराज यावदागामि कार्तिकीम् । तावद्भवेत्सुधर्मात्मासर्वधर्मोत्तमोत्तमः
व्रतं च कुरुते मर्त्यः सयाति परमांगतिम् । एतस्मात्कारणाद्राजन्कर्त्तव्या च प्रयत्नतः
नातःपरतरा काचित्पवित्रा पापनाशिनी । यस्यां स्वपिति देवेशः शङ्खचक्रगदाधरः ॥
तस्यां च पूजयेद्देवं शङ्खचक्रगदाधरम् । रात्रौ जागरणं कृत्वा भक्त्याचैव विशेषतः ॥

नास्याःपुण्यस्य सङ्ख्यानं कर्तुं शक्तश्चतुर्मुखः ।
एवं यःकुरुते राजन्नैकादश्या व्रतोत्तमम् ॥ ३० ॥

सर्वपापहरंचैव भुक्तिमुक्तिप्रदायकम् । स च लोके मम सदा श्वपचोऽपि प्रियङ्करः ॥
दीपदानेन पालाशपत्रे भुक्त्याव्रतेन च । चातुर्मास्यं नयन्तीह ते नरा मम वल्लभाः ॥३२
चातुर्मास्ये हरौ सुप्ते भूमिशायी भवेन्नरः । श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा

दुग्धमाश्वयुजि त्याज्यं कार्त्तिके द्विदलं त्यजेत् ।
अथवा ब्रह्मचर्यस्थःस याति परमांगतिम् ॥ ३४ ॥

एकादश्याव्रतेनैव पुमान्पापैर्विमुच्यते । कर्तव्या सर्वदा राजन्विस्मर्तव्या न कर्हिचित्

शयनी बोधनी मध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थस्य नान्याकृष्णा कदाचन ॥ ३६ ॥

शृणुयाच्चैव यो राजन्कथां पापहरां पराम् । अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-
नारदसंवादे देवशयन्येकादशीमाहात्म्यं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥५४॥

# पञ्चपञ्चाशत्तमोऽध्यायः

## श्रावणकृष्णपक्षकामिकैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

श्रावणस्यासितेपक्षे किं नामैकादशी भवेत् । तन्नः कथय गोविन्द वासुदेव नमोऽस्तु ते

श्रीकृष्ण उवाच ।

शृणु राजन्प्रवक्ष्यामि आख्यानं पापनाशनम् । यत्प्रोक्तं ब्रह्मणा पूर्वं पृच्छते नारदायवै

नारद उवाच ।

भगवञ्छ्रोतुमिच्छामि त्वत्तोऽहंकमलासन । श्रावणस्यासितेपक्षे किं नामैकादशीभवेत्

को देवःको विधिस्तस्याःकिं पुण्यं कथय प्रभो ।
इति तस्य वचःश्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ४ ॥

ब्रह्मोवाच ।

शृणु नारद ते वच्मि लोकानां हितकाम्यया ।
श्रावणैकादशी कृष्णा कामिका नाम नामतः ॥ ५ ॥

अस्याःश्रवणमात्रेण वाजपेयफलं लभेत् । अस्यां यजति देवेशं शङ्खचक्रगदाधरम् ॥
श्रीधराख्यं हरिं विष्णुं माधवं मधुसूदनम् । पूजयेद्ध्यायते यो वै तस्य पुण्यफलं शृणु

न गङ्गायां न काश्यां च नैमिषे न च पुष्करे ।
तत्फलं समवाप्नोति यत्फलं कृष्णपूजनात् ॥ ८ ॥
गोदावर्यां गुरौ सिंहे व्यतीपाते च दण्डके ।
यत्फलं समवाप्नोति तत्फलं कृष्णपूजनात् ॥ ९ ॥

ससागरवनोपेतां यो ददाति वसुन्धराम् । कामिकाव्रतकारी च ह्युभौ समफलौस्मृतौ
प्रसूयमानां यो धेनुं दद्यात्सोपस्करां नरः । तत्फलं समवाप्नोति कामिकाव्रतकारकः
श्रावणे श्रीधरं देवं पूजयेद्यो नरोत्तमः । तेनैव पूजिता देवा गन्धर्वोरगपन्नगाः ॥१२॥

तस्मात्सर्वप्रयत्नेन कामिकादिवसे हरिः । पूजनीयो यथाशक्ति मानुषैःपापभिरुभिः ॥
ये संसारार्णवेमग्नाःपापपङ्कसमाकुले । तेषामुद्धरणार्थाय कमिकाव्रतमुत्तमम् ॥ १४ ॥
नातःपरतरा काचित्पवित्रा पापहारिणी । एवं नारद जानीहि स्वयमाहपरो हरिः ॥
अध्यात्मविद्या निरतैर्यत्फलं प्राप्यते नरैः । ततो बहुतरंविद्धि कामिकाव्रतसेविनाम्

रात्रौ जागरणं कृत्वा कामिकाव्रतकृन्नरः ।
न पश्यति यमं रौद्रं नैव गच्छति दुर्गतिम् ॥ १७ ॥
न पश्यति कुयोनिं च कामिकाव्रतसेवनात् ।
कामिकाया व्रतेचीर्णे कैवल्यं योगिनो गताः ॥ १८ ॥

तस्मात्सर्वप्रयत्नेन कर्तव्या नियतात्मभिः । तुलसीप्रभवैःपत्रैर्यो नरःपूजयेद्धरिम् ॥१६
न लिप्यते स पापेन पद्मपत्रमिवाम्भसा । सुवर्णभारमेकं तु रजतं च चतुर्गुणम् ॥२०
तत्फलं समवाप्नोति तुलसीदल पूजनात् । रत्नमौक्तिकवैडूर्य प्रवालादिभिरर्चितः ॥२१
न तुष्यति तथा विष्णुस्तुलसीदलतो यथा । तुलसीमञ्जरीभिश्च पूजितो येन केशवः ॥

आजन्म पातकं तस्य निश्चयं याति संक्षयम् ॥ २२ ॥
या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुःपावनी
रोगाणामभिवन्दिता निरसिनी सिक्तान्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतःकृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥२३॥
दीपं ददाति यो मर्त्यो दिवारात्रं हरेर्दिने ।
तस्य पुण्यस्य सङ्ख्यातुं चित्रगुप्तो न वेत्त्यलम् ॥ २४ ॥

कृष्णाग्रेदीपको यस्य ज्वलत्येकादशीदिने । पितरस्तस्य तृप्यन्ति अमृतेनदिविस्थिताः
घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः । प्रयाति सूर्यलोकं च दीपकोटि शतार्चितः ॥
अयं तवाग्रे कथितःकामिका महिमा मया । अतो नरैःप्रकर्त्तव्या सर्वपातकहारिणी ॥
ब्रह्महत्यापहरणी भ्रूणहत्याविनाशिनी । वैष्णवस्थानदात्री च महापुण्यफलप्रदा ॥२८

श्रुत्वा माहात्म्यमेतस्या नरः श्रद्धासमन्वितः ।

विष्णुलोकमवाप्नोति सर्वपापैः प्रमुच्यते ॥ २६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे श्रावणकृष्णैकादशीमाहात्म्यं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशत्तमोऽध्यायः

### श्रावणशुक्लपुत्रदैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

श्रावणस्य सितेपक्षे किं नामैकादशी भवेत् । कथयस्व प्रसादेन ममाग्रे मधुसूदन ॥१॥

श्रीकृष्ण उवाच ।

शृणुष्वावहितो राजन्कथां पापहरां पराम् । यस्याः श्रवणमात्रेण वाजपेयफलं भवेत्

द्वापरस्य युगस्यादौ पुरा माहिष्मती पुरे ।
राजा महीजिदाख्यातो राज्यं पालयति स्वकम् ॥ ३ ॥

पुत्रहीनस्य तस्यैव न तद्राज्यं सुखप्रदम् । अपुत्रस्य सुखं नास्ति इह लोके परत्र च ॥४

चिन्तमानस्य तस्यैवं कालो वहुतरो गतः ।
न प्राप्तश्च सुतो राज्ञा सर्वसौख्यप्रदो नृणाम् ॥ ५ ॥

दृष्ट्वात्मानं प्रवयसं राजाचिन्तापरोऽभवत् । सदोगतःप्रजामध्य इदं वचनमब्रवीत्

इह जन्मनि भोलोका न मया पातकं कृतम् ।
अन्यायोपार्जितं वित्तं क्षिप्तं कोशे मया न हि ॥ ७ ॥

ब्रह्मस्वं देवद्रविणं न गृहीतं मया क्वचित् । न्यासापहारो न कृतः परस्य बहु पापदः ॥

पुत्रवत्पालितो लोको धर्मेण विजिता मही । दुष्टेषु पातितो दण्डो बन्धुपुत्रोपमेष्वपि

शिष्टास्तु पूजिता नित्यं न द्वेष्याश्च मया जनाः ।
इत्येवं ब्रुवतो मार्गं धर्मयुक्तं द्विजोत्तमाः! ॥ १० ॥

कस्मान्मम गृहे पुत्रो न जातस्तद्विमृश्यताम् ।
इति वाक्यं द्विजाः श्रुत्वा सप्रजाः स पुरोहिताः ॥ ११ ॥
मन्त्रयित्वा नृपहितं जग्मुस्ते गहनं वनम् । इतस्ततश्च पश्यन्त आश्रमानृषिसेवितान्
नृपतेर्हितमिच्छन्तो ददृशुर्मुनिसत्तमम् । तप्यमानं तपो घोरं निरालम्बं निरामयम् ॥१३
निराहारं जितात्मानं जितक्रोधं सनातनम् ।
लोमशं धर्मतत्त्वज्ञं सर्वशास्त्रविशारदम् ॥ १४ ॥
दीर्घायुषं महात्मानं सकेशं ब्रह्मसंमितम् । कल्पे कल्पे गते तस्य एकं लोमविशीर्यते
अतो लोमश नामायं त्रिकालज्ञो महामुनिः ।
तं दृष्ट्वा हर्षिताः सर्वे आजग्मुस्तस्य सन्निधिम् ॥ १६ ॥
यथान्यायं यथार्हं ते नमश्चक्रुर्यथोदितम् । विनयावनताः सर्वे ऊचुस्ते च परस्परम् ॥१७
अस्मद्भाग्यवशादेव प्राप्तोऽयं मुनिसत्तमः । तांस्तथा सप्रजान्वीक्ष्य उवाच ऋषिसत्तमः

लोमश उवाच ।

किमर्थमिह संप्राप्ताः कथयध्वं सकारणम् । दर्शनाद्धृष्टमनसः स्तुवन्तश्चैव मां किमु
असंशयं करिष्यामि भवतां यद्धितं भवेत् । परोपकृतये जन्म मादृशानां न संशयः ॥

जना ऊचुः ।

श्रूयतामभिधास्यामो वयं स्वागमकारणम् । संशयच्छेदनार्थाय तव सान्निध्यमागताः
पद्मयोनेः परतरस्त्वत्तः श्रेष्ठोनविद्यते । अतः कार्यवशात्प्राप्ता समीपं भवतो वयम् ॥
महीजिन्नाम राजाऽसौपुत्रहीनोऽस्ति सांप्रतम् । वयं तस्य प्रजा ब्रह्मन्पुत्रवत्तेन पालिताः
तं पुत्ररहितं दृष्ट्वा तस्य दुःखेन दुःखिताः ।
तपः कर्तुमिहायाता मतिं कृत्वा तु नैष्ठिकीम् ॥ २४ ॥
तस्य भाग्येन दृष्टोऽसि ह्यस्माभिस्त्वं द्विजोत्तम ! ।
महतां दर्शनेनैव कार्यसिद्धिर्भवेन्नृणाम् ॥ २५ ॥
उपदेशं वद मुने राज्ञः पुत्रो यथा भवेत् । इति तेषां वचः श्रुत्वा मुहूर्त्तं ध्यानमास्थितः
प्रत्युवाच मुनिर्ज्ञात्वा तस्य जन्म पुरातनम् ॥ २६ ॥

लोमश उवाच ।

पुरा जन्मनि वैश्योऽयंधनहीनो नृशोषकृत् । वाणिज्यकर्मनिरतो ग्रामाद्ग्रामान्तरंभ्रमन्
ज्येष्ठे मासि सितेपक्षे दशमी दिवसे तथा । मध्यगे द्युमणौप्राप्ते ग्रामसीम्नितृषाकुलः
रम्यं जलाशयं दृष्ट्वा जलपाने मनो दधे । सद्यस्ततः सवत्सा च धेनुस्तत्र समागता

तृष्णातुरा निदाघार्ता तस्यामम्बु पपौ तु सा ।
पीवन्तीं वारयित्वा तामसौ तोयं पपौ स्वयम् ॥ ३० ॥
कर्मणा तेन पापेन पुत्रहीनो नृपोऽभवत् ।
कस्यापि जन्मनः पुण्यात्प्राप्तं राज्यमकण्टकम् ॥ ३१ ॥

लोका ऊचुः ।

पुण्यात्पापं क्षयं याति पुराणे श्रूयते मुने । पुण्योपदेशं कथय येन पापक्षयो भवेत् ॥
यथा भवत्प्रसादेन पुत्रो भवति भूपतेः ॥ ३२ ॥

लोमश उवाच ।

श्रावणे शुक्लपक्षे तु पुत्रदा नाम विश्रुता । एकादशी वाञ्छितदा कुरुध्वं तद्व्रतं जनाः
इति श्रुत्वा नमस्कृत्य मुनिमेत्यपुरंव्रतम् । यथाविधि यथान्यायं कृतं तैर्जागरान्वितम्
तस्य पुण्यं सुविमलं दत्तं नृपतयेजनैः । दत्ते पुण्येऽथ सा राज्ञी गर्भमाधत्त शोभनम् ॥
प्राप्ते प्रसवकाले सा सुषुवे पुत्रमूर्जितम् । श्रावणस्य सिते पक्षे कर्कटस्थेदिवाकरे ॥

द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ।
हेमरौप्यताम्रक्षौमैः सूत्रैः कौशेयपद्मजैः ॥ ३७ ॥
कुशैः काशैश्च कार्पासैर्ब्राह्मण्याकर्तितैः शुभैः ।
स्नात्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ॥ ३८ ॥

गोदोहान्तरिते काले पूर्वेद्युरधिवासनम् । ब्राह्मणेभ्यो नमस्कृत्य गुरुपादौ प्रणम्य च ॥
गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं ततः । ब्राह्मणाः क्षत्त्रियावैश्या भिल्लाः शूद्रावेस्तथैव

स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकम् ।
ततः पवित्रं गुरवे दद्याद्वै विधिपूर्वकम् ॥ ४१ ॥

ब्राह्मणान्वैष्णवांश्चैव गंधधूपादिनार्चयेत् ।
अतोदेवेति मन्त्रेण द्विजो विष्णौ निवेदयेत् ॥ ४२ ॥
शूद्रस्तु मूलमन्त्रेण यथाविष्णौ तथा शिवे । वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं नरैः ॥
भुक्तिं मुक्तिं च वाञ्छद्भिःसंसारे शोकसागरे। न करोति विधानेन पवित्रारोपणं तुयः
तस्य सांवत्सरी पूजा निष्फला वैष्णवस्य तु ।
श्रुत्वा माहात्म्यमेतस्या नरःपापात्प्रमुच्यते । इह पुत्रसुखं प्राप्य परत्र स्वर्गतिं लभेत्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापतिनारद-
संवादे श्रावणशुक्लपवित्रारोपणीपुत्रदैकादशी नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

————

## सप्तपञ्चाशत्तमोऽध्यायः

### भाद्रकृष्णपक्षाजैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

भाद्रस्य कृष्णपक्षे तु किंनामैकादशी भवेत् । एतदिच्छाम्यहं श्रोतुं कथयस्व जनार्दन

श्रीकृष्ण उवाच ।

शृणुष्वैकमना राजन्कथयिष्यामि विस्तरात् ।
अजेति नामतः प्रोक्ता सर्वपापप्रणाशिनी ॥ २ ॥
पूजयित्वा हृषीकेशं व्रतमस्यां करोति यः । पापानि तस्य नश्यन्ति व्रतस्य श्रवणादपि
नातः परतरा राजँल्लोकद्वयहितायवै । सत्यमुक्तं मया ह्येतन्नासत्यं मम भाषितम् ॥४॥
हरिश्चन्द्र इति ख्यातो बभूव नृपतिः पुरा । चक्रवर्ती सत्यसन्धः समस्ताया भुवः पतिः
कस्यापि कर्मणः प्राप्तौ राज्यभ्रष्टो बभूव सः ।
विक्रीतौ वनितापुत्रौ स चकारात्मविक्रयम् ॥ ६ ॥
पुल्कसस्य च दासत्वं गतो राजा स पुण्यकृत् ।

सत्यमालम्ब्य राजेन्द्र ! मृतचैलापहारकः ॥७॥
सोऽभवन्नृपतिश्रेष्ठो न सत्याच्चलितस्तथा । एवं च तस्या नृपतेर्बहवो वत्सरागताः
ततश्चिन्तापरो राजा स बभूवातिदुःखितः ।
किं करोमि क्व गच्छामि निष्कृतिर्मे कथं भवेत् ॥६॥
इति चिन्तयतस्तस्य मग्नस्यवृजिनार्णवे । आजगाम मुनिः कश्चिज्ज्ञात्वा राजानमातुरम्
परोपकरणार्थाय निर्मिता ब्रह्मणा द्विजाः । स तं दृष्ट्वा द्विजवरं ननाम नृपसत्तमः ॥
कृताञ्जलिपुटो भूत्वा गौतमस्याग्रतः स्थितः ।
कथयामास वृत्तान्तमात्मनो दुःखसंयुतम् ॥ १२ ॥
श्रुत्वा नृपतिवाक्यानि गौतमो विस्मयान्वितः । उपदेशं नृपतये व्रतस्यास्य ददौ मुनिः
मासि भाद्रपदे राजन्कृष्णपक्षेऽति शोभना । एकादशीसमायाताअजा नामेति पुण्यदा
अस्याः कुरु व्रतं राजन्पापस्यान्तो भविष्यति ।
तव भाग्यवशादेषा सप्तमेऽह्नि समागता ॥ १५ ॥
उपवासपरो भूत्वा रात्रौ जागरणं कुरु । एवमस्या व्रते चीर्णे तव पापक्षयो ध्रुवम् ॥
तव पुण्यप्रभावेण चागतोऽहं नृपोत्तम । इत्येवं कथयित्वा च मुनिरन्तरधीयत ॥१७॥
मुनिवाक्यं नृपः श्रुत्वा चकार व्रतमुत्तमम् ।
कृते तस्मिन्व्रते राज्ञा पापस्यान्तोऽभवत्क्षणात् ॥ १८ ॥
श्रूयतां राजशार्दूल प्रभावोऽस्य व्रतस्य च । यद्दुःखंबहुभिर्वर्षैर्भोक्तव्यं तत्क्षयोभवेत्
निस्तीर्णदुःखोराजासीद्व्रतस्यास्य प्रभावतः । पत्न्यासहसमायोगं पुत्रजीवनमाप सः
दिवि दुन्दुभयो नेदुःपुष्पवर्षमभूद्दिवः । एकादश्याः प्रभावेण प्राप्य राज्यमकण्टकम् ॥
स्वर्गं लेभे हरिश्चन्द्रः सपौरः सपरिच्छदः । ईदृग्विधं व्रतं राजन्येकुर्वन्ति च मानवाः
सर्वपापविनिर्मुक्तास्त्रिदिवं यान्ति ते नृप । पठनाच्छ्रवणाद्वापि अश्वमेधफलं लभेत्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-
नारदसंवादे भाद्रपदकृष्णाजैकादशीमाहात्म्यं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

# अष्टपञ्चाशत्तमोऽध्यायः

## भाद्रशुक्लपद्मैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

नभस्यस्य सिते पक्षे किंनामैकादशी भवेत् । कोदेवःकोविधिस्तस्यएतदाख्याहि केशव

श्रीकृष्ण उवाच ।

कथयामि महीपाल कथामाश्चर्यकारिणीम् । कथयामास यां ब्रह्मा नारदाय महात्मने

नारद उवाच ।

कथयस्व प्रसादेन चतुर्मुख ! नमोऽस्तु ते ।

नभस्य शुक्लपक्षे तु किंनामैकादशी भवेत् । एतदिच्छाम्यहं श्रोतुं विष्णोराराधनाय वै

ब्रह्मोवाच ।

वैष्णवोऽसि मुनिश्रेष्ठ साधुपृष्टं किलत्वया । नातः परतरा लोके पवित्रा हरिवासरात्

पद्मा नामेति विख्याता नभस्यैकादशी सिता।

हृषीकेशः पूज्यतेऽस्यां कर्त्तव्यं व्रतमुत्तमम् ॥ ५ ॥

कथयामि तवाग्रेऽहं कथांपौराणिकीं शुभाम् । यस्याः श्रवणमात्रेणमहापापं प्रणश्यति

मान्धाता नाम राजर्षिर्विवस्वद्वंशसंभवः । बभूव चक्रवर्ती स सत्यसन्धः प्रतापवान् ॥

धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् ।

न तस्य राज्ये दुर्भिक्षं नाधयो व्याधयस्तथा ॥ ८ ॥

निरातङ्काः प्रजास्तस्य धनधान्यसमेधिताः ।

न्यायेनोपार्जितं वित्तं तस्य कोशे महीपतेः ॥ ६ ॥

स्वस्वधर्मे प्रवर्त्तन्ते सर्वे वर्णाश्रमास्तथा । कामधेनुसमा भूमिस्तस्य राज्ये महीपतेः ॥

तस्यैवं कुर्वतो राज्यं बहुवर्षगणागताः । अथैकस्मिंश्च संप्राप्ते विपाकः कर्मणः खलु

वर्षत्रयं तद्विषये न ववर्ष बलाहकः । तेन भग्नाः प्रजास्तस्य बभूवुः क्षुधयार्दिताः ॥१२॥

स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः ।
बभूव विषयस्तस्याभाग्येन दैवपीडितः । अथ प्रजाः समागम्य राजानमिदमब्रुवन् ॥

प्रजा ऊचुः ।

श्रोतव्यं नृपशार्दूल प्रजानां वचनं त्वया । आपो नारा इति प्रोक्ताः पुराणेषुमनीषिभिः
अयनं ता भगवतस्तस्मान्नारायणः स्मृतः । पर्जन्यरूपो भगवान्विष्णुःसर्वगतः स्थितः
स एवं कुरुते वृष्टिं वृष्टेरन्नं ततः प्रजाः ।
तदभावे नृपश्रेष्ठ क्षयं गच्छन्ति वै प्रजाः । तथा कुरु नृपश्रेष्ठ योगः क्षेमो यथा भवेत्

राजोवाच ।

सत्यमुक्तं भवद्भिश्च नमिथ्याऽभिहितंकचित् । अन्नं ब्रह्म यतः प्रोक्तमन्ने सर्वं प्रतिष्ठितम्
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते । इत्येवं श्रूयते लोके पुराणे बहुविस्तरे ॥ १८ ॥
नृपाणामपचारेण प्रजानां पीडनं भवेत् । नाहं पश्याम्यात्मकृतमेवं बुद्ध्या विचारयन्
तथाऽपि प्रयतिष्येऽहं प्रजानां हितकाम्यया । इति कृत्वा मतिं राजा परिमेयपरिच्छदः
नमस्कृत्य विधातारं जगाम गहनं वनम् ।
चचार मुनिमुख्यैश्चाप्याश्रमांस्तापसैः श्रितान् ॥ २१ ॥
ददर्शाथ ब्रह्मसुतमृषिमाङ्गिरसं नृपः । तेजसा द्योतितदिशं द्वितीयमिव पद्मजम् ॥२२॥
तं दृष्ट्वा हर्षितो राजा अवतीर्य स्ववाहनात् । नमश्चक्रेऽस्य चरणौ कृताञ्जलिपुटो वशी
मुनिस्तमभिनन्द्याथस्वस्तिवाचनपूर्वकम् । पप्रच्छ कुशलं राज्ये सप्तस्वङ्गेषु भूपतेः ॥
निवेदयित्वा कुशलं पप्रच्छानामयं नृप । दत्तासनो गृहीतार्घ्य उपविष्टोऽस्य संनिधौ
प्रत्युवाच मुनिं राजा पृष्टो ह्यागमकारणम् ॥ २६ ॥

राजोवाच ।

भगवन्धर्मविधिना ममपालयतो महीम् । अनावृष्टिश्च संवृत्ता नाहं वेद्म्यत्रकारणम् ॥
संशयच्छेदनायात्र आगतोऽहं तवान्तिके । योगक्षेमविधानेन प्रजानां कुरु निर्वृतिम् ॥

ऋषिरुवाच ।

एतत्कृतयुगं राजन्युगानामुत्तमं मतम् । अत्र ब्रह्मपरा लोका धर्मश्चात्र चतुष्पदः ॥२९॥

अस्मिन्युगे तपोयुक्ता ब्राह्मणा नेतरे जनाः । विषये तव राजेन्द्र वृषलोऽयं तपस्यति
एतस्मात्कारणाच्चैव नवर्षति बलाहकः । कुरु तस्य वधे यत्नं येन दोषः प्रशाम्यति

राजोवाच ।

नाहमेनं हनिष्यामि तपस्यन्तमनागसम् । धर्मोपदेशं कथय उपसर्गविनाशनम् ॥ ३२ ॥

ऋषिरुवाच ।

यद्येवं तर्हि नृपते कुरुष्वैकादशीव्रतम् । नभस्यस्यसिते पक्षे पद्मनामेति विश्रुता ॥३३
तस्या व्रतप्रभावेण सुवृष्टिर्भविता ध्रुवम् । सर्वसिद्धिप्रदाह्येषा सर्वोपद्रवनाशिनी ॥
अस्या व्रतं कुरु नृप सप्रजः सपरिच्छदः । इतिवाक्यमृषेः श्रुत्वा राजा स्वगृहमागतः
भाद्रमासे सिते पक्षे पद्माव्रतमथाकरोत् ।
प्रजाभिः सह सर्वाभिश्चातुर्वर्ण्यसमन्वितः ॥ ३६ ॥
एवं व्रते कृते राजन्प्रववर्ष बलाहकः । जलेन प्लाविता भूमिरभवत्सस्यशालिनी ॥३७॥
ऋषीश्वरप्रभावेण लोकाः सौख्यं प्रपेदिरे । एतस्मात्कारणादेवं कर्त्तव्यं व्रतमुत्तमम् ॥
दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे । वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च ॥३९॥
नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥४०
भुक्तिमुक्तिप्रदश्चैव लोकानां सुखदायकः । पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते ।४१

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे भाद्रपदशुक्लपद्मैकादशी माहात्म्यं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः

### आश्विनकृष्णपक्षेन्दिरैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

कथयस्व प्रसादेन ममाग्रे मधुसूदन । इषस्य कृष्णपक्षे तु किंनामैकादशी भवेत् ॥१॥

श्रीकृष्ण उवाच ।

आश्विने कृष्णपक्षे तु इन्दिरा नामनामतः । तस्या व्रतप्रभावेण महापापं प्रणश्यति ॥
अधोयोनिगतानां च पितृणां गतिदायिनी । शृणुष्वावहितो राजन्कथां पापहरां पराम्
यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । पुरा कृतयुगे राजन्बभूव नृपनन्दनः ॥ ४ ॥
इन्द्रसेन इति ख्यातः पुरा माहिष्मती पतिः ।
स राजा पालयामास धर्मेण यशसान्वितः ॥ ५ ॥
पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । माहिष्मत्यधिपो राजा विष्णुभक्तिपरायणः
जपन्गोविन्दनामानि मुक्तिदानि नराधिपः । कालं नयति विधिवद्ध्यात्मध्यानचिन्तकः
एकस्मिन्दिवसे राज्ञि सुखासीने सदोगते । अवतीर्यागमत्तत्र ह्यम्बरान्नारदो मुनिः ॥
तमागतमभिप्रेक्ष्य प्रत्युत्थाय कृताञ्जलिः । पूजयित्वाऽथ विधिना चासने संन्यवेशयत्
सुखोपविष्टः स मुनिः प्रत्युवाच नृपोत्तमम् ॥ ६ ॥

मुनिरुवाच ।

कुशलं तव राजेन्द्र सप्तस्वङ्गेषु वर्तते ।
धर्मे मतिर्वर्तते ते विष्णुभक्तिरतिस्तथा । इति वाक्यं तु देवर्षेः श्रुत्वा राजा तमब्रवीत्

राजोवाच ।

त्वत्प्रसादान्मुनिश्रेष्ठ सर्वं च कुशलं मम ।
अद्य क्रतुक्रियाः सर्वाः सफलास्तव दर्शनात् । प्रसादं कुरु देवर्षे ब्रूह्यागमनकारणम् ॥

नारद उवाच ।

श्रूयतां नृपशार्दूल मद्वचो विस्मयप्रदम् । ब्रह्मलोकादहं प्राप्तो यमलोकं नृपोत्तम ॥१२
शमनेनार्चितो भक्त्या उपविष्टो वरासने । धर्मशीलाः सत्यवन्तो भास्करिं समुपासते
बहुपुण्यप्रकर्त्ता च व्रतवैकल्यदोषतः । सभायां श्राद्धदेवस्य मयादृष्टः पिता तव ॥१४॥
कथितस्तेन संदेशस्तं निबोध जनेश्वर ! ।
इन्द्रसेन इति ख्याता राजा माहिष्मतीपतिः ॥ १५ ॥
तस्याग्रे कथय ब्रह्मन्स्थितं मां यमसंनिधौ । केनापि चान्तरायेण पूर्वजन्मोद्भवेन च ॥

स्वर्गं प्रषेय मां पुत्र इन्दिरापुण्यदानतः । इत्युक्तोऽहं समायातः समीपं तव पार्थिव ॥
पितुः स्वर्गकृते राजन्निन्दिराव्रतमाचर । तेन व्रतप्रभावेण स्वर्गं यास्यति ते पिता ॥

राजोवाच ।

कथयस्व प्रसादेन भगवन्निन्दिराव्रतम् । विधिना केन कर्त्तव्यं कस्मिन्पक्षे तिथौ तथा

नारद उवाच ।

शृणु राजेन्द्र ! ते वच्मि व्रतस्यास्य विधिं शुभम् ।
आश्विनस्यासिते पक्षे दशमी दिवसे शुभे ॥ २० ॥

प्रातःस्नानं प्रकुर्वीत श्रद्धायुक्तेन चेतसा । ततो मध्याह्नसमये स्नानं कृत्वा समाहितः ॥
पितॄणां प्रीतये श्राद्धं कुर्याच्छ्रद्धासमन्वितः । एकभक्तं ततः कृत्वारात्रौ भूमौ शयीत च
प्रभाते विमले जाते प्राप्ते चैकादशीदिने । मुखप्रक्षालनं कुर्याद्दन्तधावनवर्जितम् ॥
उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः । अद्य स्थित्वा निराहारः सर्वभोगविवर्जितः

श्वो भोक्ष्ये पुण्डरीकाक्ष शरणं मे भवाच्युत ।
इत्येवं नियमं कृत्वा मध्याह्नसमये तथा ॥ २५ ॥
शालग्रामशिलाग्रे तु स्नानं कुर्याद्यथाविधि ।
पूजयित्वा हृषीकेशं धूपगन्धादिभिस्तथा ॥ २६ ॥

रात्रौ जागरणं कुर्यात्केशवस्य समीपतः । ततः प्रभातसमये प्राप्ते वै द्वादशीदिने ॥

अर्चयित्वा हरिं भक्त्या श्राद्धं कुर्याद्यथाविधि ।
पितॄणां प्रीतये श्राद्धं कुर्याच्छ्रद्धासमन्वितः ॥ २८ ॥

गोधूमचूर्णैर्यच्छ्राद्धं कृतं मेध्यं कृतं भवेत् । यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा ॥२९

ब्राह्मणान्भोजयेद्राजन्दक्षिणाभिः प्रपूजितान् ।
बन्धुदौहित्रपुत्राद्यैः स्वयं भुञ्जीतवाग्यतः ॥ ३० ॥

अनेन विधिना राजन्कुरुव्रतमतन्द्रितः । विष्णुलोकं प्रयास्यन्ति पितरस्तव भूपते ॥
इत्युक्त्वा नृपतिं राजन्मुनिरन्तरधीयत । यथोक्तविधिना राजा चकार व्रतमुत्तमम् ॥
अन्तःपुरेण सहितः पुत्रभृत्यसमन्वितः । कृते व्रते तु कौन्तेय पुष्पवृष्टिरभूद्दिवः ॥३३॥

तत्पिता गरुडारूढो जगाम हरिमन्दिरम् ।
इन्द्रसेनोऽपि राजर्षिः कृत्वा राज्यमकण्टकम् ॥ ३४ ॥
राज्ये निवेश्य तनयं जगाम त्रिदिवं स्वयम् । इन्दिराव्रतमाहात्म्यं तवाग्रे कथितं मया
पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते ।
भुक्त्वेह निखिलान्भोगान्विष्णुलोके वसेच्चिरम् ॥ ३६ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवाद आश्विनकृष्णेन्दिरैकादशीमाहात्म्यं नामैकोनषष्टितमोऽध्यायः ॥५९॥

---

## षष्टितमोऽध्यायः

### आश्विनशुक्लपक्षपाशाङ्कुशैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

कथयस्व प्रसादेन ममाग्रे मधुसूदन । इषस्य शुक्लपक्षे तु किंनामैकादशी भवेत् ॥ १ ॥

श्रीकृष्ण उवाच ।

शृणु राजेन्द्र ! वक्ष्यामि माहात्म्यं पापनाशनम् ।
शुक्लपक्षे चाश्विनस्य भवेदेकादशी तु या ॥ २ ॥
पाशाङ्कुशेति विख्याता सर्वपापहरा परा । पद्मनाभाभिधानं मां पूजयेत्तत्र मानवः ॥
सर्वाभीष्टफलप्राप्त्यै स्वर्गमोक्षप्रदं नृणाम् । तपस्तप्त्वा पुनस्तीव्रं चिरं सुनियतेन्द्रियः
यत्फलं समवाप्नोति तन्नत्वा गरुडध्वजम् ।
कृत्वाऽपि बहुशः पापं नरो मोहसमन्वितः ॥ ५ ॥
न याति नरकं नत्वा सर्वपापहरं हरिम् । पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च
तानि सर्वाण्यवाप्नोति विष्णोर्नामानुकीर्त्तनात् ।
देवं शार्ङ्गधरं विष्णुं ये प्रपन्ना जनार्दनम् ॥ ७ ॥

न तेषां यमलोकस्य यातना जायते क्वचित्। उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः
न याति यातनां यामीं पापं कृत्वाऽपि दारुणम्।
वैष्णवः पुरुषो भूत्वा शिवनिन्दां करोति यः ॥ ६ ॥
न विन्देद्वैष्णवं लोकं स याति नरकं ध्रुवम्।
शैवः पाशुपतोभूत्वा विष्णुनिन्दां करोति चेत् ॥ १० ॥
रौरवे पच्यते घोरे यावदिन्द्राश्चतुर्दश। नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते ॥
यादृशं पद्मनाभस्य व्रतं पातकनाशनम्। तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम्। अश्वमेधसहस्राणि राजसूयशतानि च ॥१३
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्। एकादशीसमं किंचिद्व्रतंलोके न विद्यते
व्याजेनापि कृता यैश्च न ते यान्ति हि भास्करिम्।
स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी ॥ १५ ॥
कलत्रसुतदा ह्येषा धनमित्रप्रदायिनी। न गङ्गा न गया राजन्न च काशी च पुष्करम्
न चापि कौरवं क्षेत्रं पुण्यं भूप हरेर्दिनात्। रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिनम्
अनायासेन भूपाल प्राप्यते वैष्णवं पदम्। दशैव मातृके पक्षे राजेन्द्र! दशपैतृके ॥
प्रियायादशपक्षे तु पुरुषानुद्धरेन्नरः। चतुर्भुजा दिव्यरूपा नागारिकृतकेतनाः ॥ १६ ॥
स्रग्विणः पीतवस्त्राश्च प्रयान्ति हरिमन्दिरम्।
बालत्वे यौवने चैव वृद्धत्वे च नृपोत्तम! ॥ २० ॥
उपोष्यैकादशीं नूनं नैव प्राप्नोति दुर्गतिम्। पाशाङ्कुशामुपोष्यैव आश्विनस्य सितेनरः
सर्वपापविनिर्मुक्तो हरिलोकं स गच्छति। दत्त्वा हेमतिलान्भूमिं गामन्नमुदकं तथा ॥
उपानच्छत्र वस्त्रादीन्न पश्यति यमं नरः।
यस्य पुण्यविहीनानि दिनान्यायान्ति यान्ति च ॥ २३ ॥
स लोहकारभस्त्रेव श्वसन्नपि न जीवति। अवन्ध्यं दिवसं कुर्याद्दरिद्रोऽपिनृपोत्तम ॥
सदाचरन्यथाशक्ति स्नानदानादिकाःक्रियाः। होमस्नानजपध्यानसत्रादि पुण्यकर्मणाम्
कर्त्तारो नैव पश्यन्ति घोरां तां यमयातनाम्।

दीर्घायुषो धनाढ्याश्च कुलीना रोगवर्जिताः ॥ २६ ॥
दृश्यन्ते मानवालोके पुण्यकर्त्तार ईदृशाः । किमत्र बहुनोक्तेन यान्त्यधर्मेण दुर्गतिम् ॥
आरोहन्ति दिवं धर्मैर्नात्र कार्याविचारणा । इतिते कथितं राजन्यत्पृष्टोऽहं त्वयानघ
पाशाङ्कुशाया माहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥ २८ ॥
इति श्रीपाद्मेमहापुराणे पञ्चपञ्चाशत्साहस्त्र्यां संहितायां षष्ठे उत्तरखण्डे उमापतिनारद-संवादे आश्विनशुक्लपाशाङ्कुशैकादशीमाहात्म्यं नाम षष्टितमोऽध्यायः ॥६०॥

---

# एकषष्टितमोऽध्यायः

## कार्तिककृष्णपक्षरमैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

कथयस्व प्रसादेन मयि स्नेहाज्जनार्दन । कार्तिकस्यासिते पक्षे किंनामैकादशी भवेत्

श्रीकृष्ण उवाच ।

श्रूयतां राजशार्दूल कथयामि तवाग्रतः । कार्त्तिके कृष्णपक्षे तु रमा नामसुशोभना ॥
एकादशी समाख्याता महापापहरापरा । अस्याः प्रसङ्गतो राजन्माहात्म्यं प्रवदामि ते
मुचुकुन्द इति ख्यातो बभूव नृपतिः पुरा । देवेन्द्रेण समं तस्य मित्रत्वमभवन्नृप ॥४॥
यमेन वरुणेनैव कुवेरेणापि सर्वथा । विभीषणेन यस्यैव सखित्वमभवन्नृप ॥ ५ ॥
विष्णुभक्तः सत्यसन्धो बभूव नृपतिः परः ।
तस्यैवं शासतो राजन्राज्यं निहतकण्टकम् ॥ ६ ॥
बभूव दुहिता गेहे चन्द्रभागा सरिद्वरा । शोभनाय च सा दत्ता चन्द्रसेनसुताय वै ॥
स कदाचित्समायातः श्वशुरस्य गृहे नृप । एकादशी व्रतदिनं समायातं सुपुण्यदम् ॥
समागते व्रतदिने चन्द्रभागा त्वचिन्तयत् । किंभविष्यति देवेश मम भर्त्ताऽतिदुर्बलः ॥
क्षुधां न क्षमते सोढुं पिता चैवोग्रशासनः ।

पटहस्ताड्यते यस्य संप्राप्ते दशमीदिने ॥ १० ॥
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं हरेर्दिने ।
श्रुत्वा पटहनिर्घोषं शोभनस्त्वब्रवीत्प्रियाम् ॥ ११ ॥
किं कर्त्तव्यं मया कान्ते ब्रूह्युपायं सुशोभने । कृतेन येन मे सम्यग्जीवितं न विनश्यति

चन्द्रभागोवाच ।

मत्पितुर्वेश्मनि प्रभो ! भोक्तव्यं नाद्य केनचित् । गजैरश्वैश्च कलभैरन्यैः पशुभिरेव च
तृणमन्नं तथा वारि न भोक्तव्यं हरेर्दिने । मानवैश्च कुतः कान्त ! भुज्यते हरिवासरे ॥
यदि त्वं भोक्ष्यसे कान्त ततो गर्हां प्रयास्यसि । एवं विचार्य मनसा सुदृढं मानसं कुरु

शोभन उवाच ।

सत्यमेतत्प्रिये वाक्यं करिष्येऽहमुपोषणम् । दैवेन विहितं यद्धि तत्तथैव भविष्यति
इति दृढां मतिं कृत्वा चकार नियमं व्रते । क्षुधया पीडिततनुः स बभूवातिदुःखितः ॥
इति चिन्तयतस्तस्य आदित्योऽस्तमगाद्गिरिम् ।
वैष्णवानां नराणां सा निशा हर्षविवर्धनी ॥ १८
हरिपूजारतानां च जागरासक्तचेतसाम् । बभूव नृपशार्दूल ! शोभनस्यातिदुःखदा ॥
रवेरुदयवेलायां शोभनः पञ्चतां गतः । दाहयामास राजा तं राजयोग्यैश्च दारुभिः ॥
चन्द्रभागा नात्मदेहं ददाह पतिना सह । कृत्वौर्ध्वदैहिकं तस्य तस्थौ जनकवेश्मनि ॥
शोभनश्च नृपश्रेष्ठ ! रमाव्रतप्रभावतः । प्राप्तो देवपुरं रम्यं मन्दराचलसानुनि ॥ २२ ॥
अनुत्तममनाधृष्यमसङ्ख्येयगुणान्वितम् । हेमस्तम्भमयैः सौधैः रत्नवैडूर्यमण्डितैः ॥
स्फाटिकैर्विविधाकारैर्विचित्रैरुपशोभितैः । सिंहासनसमारूढः सुश्वेतच्छत्रचामरः ॥
किरीटकुण्डलयुतो हारकेयूरभूषितः । स्तूयमानश्च गन्धर्वैरप्सरोगणसेवितः ॥ २५ ॥
शोभनः शोभते यत्र राजराजोऽपरो यथा ।
सोमशर्मेति विख्यातो मुचुकुन्दपुरेऽभवत् ॥ २६ ॥
तीर्थयात्राप्रसङ्गेन भ्रमन्विप्रो ददर्श तम् । नृपजामातरं ज्ञात्वा तत्समीपं जगाम सः ॥
शोभनोऽपि तदा ज्ञात्वा सोमशर्माणमागतम् ।

आसनादुत्थितः शीघ्रं नमश्चक्रे द्विजोत्तमम् ॥ २८ ॥
चकार कुशलप्रश्नं श्वशुरस्य नृपस्य च । कान्तायाश्चन्द्रभागायास्तथैव नगरस्य च॥

सोमशर्मोवाच ।

कुशलं वर्त्तते राजञ्छ्वशुरस्य गृहे तव । चन्द्रभागा कुशलिनी सर्वतः कुशलं पुरे ॥३०
स्ववृत्तं कथ्यतां राजन्नाश्चर्यं विद्यतेऽद्भुतम् ।
पुरं विचित्रं रुचिरं न दृष्टं केनचित्क्वचित् । एतदाख्य नृपते कुतः ! प्राप्तमिदं त्वया ॥

शोभन उवाच ।

कार्त्तिकस्यासिते पक्षे या नामैकादशी रमा । तामुपोष्य मया प्राप्तं द्विजेन्द्रपुरमध्रुवम्
ध्रुवं भवति येनैव तत्कुरुष्व द्विजोत्तम ! ॥ ३२ ॥

द्विज उवाच ।

कथमध्रुवमेतद्धि कथं हि भवति ध्रुवम् । तत्त्वं कथय राजेन्द्र ! तत्करिष्यामि नान्यथा

शोभन उवाच ।

मयैतद्विहितं विप्र श्रद्धाहीनं व्रतोत्तमम् । तेनाहमध्रुवं मन्ये ध्रुवं भवति तच्छृणु ॥३४
मुचुकुन्दस्य दुहिता चन्द्रभागा सुशोभना । तस्यै कथय वृत्तान्तं ध्रुवमेतद्भविष्यति ॥

श्रीकृष्ण उवाच ।

स श्रुत्वा वचनं तस्य मुचुकुन्दपुरं गतः । उवाच सर्वं वृत्तान्तं चन्द्रभागाग्रतो द्विजः ॥

सोमशर्मोवाच ।

प्रत्यक्षं दयितः कान्तस्तवदृष्टो मया शुभे ! । स्वर्गतुल्यमनाधृष्यं दृष्टं तस्य पुरं मया ॥
अध्रुवं तेन तत्प्रोक्तं ध्रुवं भवति तत्कुरु ॥ ३७ ॥

चन्द्रभागोवाच ।

तत्र मां नय विप्रर्षे पतिदर्शनलालसम् । आत्मनो व्रतपुण्येन करिष्यामि पुरं ध्रुवम् ॥
आवयोर्द्विज संयोगो यथा भवति तत्कुरु ।
प्राप्यते हि महत्पुण्यं कृत्वा योगं वियुक्तयोः ॥ ३९ ॥
इति श्रुत्वा सह तया सोमशर्मा जगाम ह । आश्रमं वामदेवस्य मन्दराचलसन्निधौ ॥

वामदेवोऽशृणोत्सवं वृत्तान्तं कथितं तयोः ।
अभ्यषिञ्चच्चन्द्रभागां वेदमन्त्रैरथोज्ज्वलाम् ॥ ४१ ॥
ऋषिमन्त्रप्रभावेण विष्णुवासरसेवनात् । दिव्यदेहा बभूवाऽसौ दिव्यां गतिमवापह ॥
पत्युःसमीपमगमत्प्रहर्षोत्फुल्ललोचना । जहर्ष शोभनोऽतीव दृष्ट्वा कान्तां समागताम्
समाहूय स्वके वामे पार्श्वे तांसंन्यवेशयत् । अथोवाच प्रियं हर्षाच्चन्द्रभागाप्रियं वचः
शृणु कान्त ! हितं वाक्यं यत्पुण्यं विद्यते मयि ।
अष्टवर्षाधिका जाता यदाऽहं पितृवेश्मनि ॥ ४५ ॥
ततः प्रभृति यच्चीर्णं मया चैकादशीव्रतम् । यथोक्तविधिसंयुक्तं श्रद्धायुक्तेन चेतसा
तेन पुण्यप्रभावेण भविष्यति पुरं ध्रुवम् । सर्वकामसमृद्धं च यावदाभूतसंप्लवम् ॥
एवं सा नृपशार्दूल रमते पतिना सह । दिव्यभोगा दिव्यरूपा दिव्याभरणभूषिता ॥
शोभनोऽपि तया सार्द्धं रमते दिव्यविग्रहः । रमाव्रतप्रभावेण मन्दराचलसानुनि ॥
चिन्तामणिसमा ह्येषा कामधेनुसमाथवा । रमाभिधाना नृपते तवाग्रे कथिता मया ॥
तस्या माहात्म्यमनघ ! श्रुतं सर्वं त्वया नृप ! ।
मया तवाग्रे कथितं माहात्म्यं पापनाशनम् ॥ ५१ ॥
एकादशीव्रतानां च पक्षयोरुभयोरपि । यथा कृष्णा तथा शुक्ला विभेदं नैव कारयेत्
सेवितैकादशी नृणां भुक्तिमुक्तिप्रदायिनी । धेनुःश्वेता यथा कृष्णा उभयोः सदृशं पयः
तथैव तुल्यफलदं स्मृतमेकादशीद्वयम् ।
एकादशीव्रतानां यो माहात्म्यं शृणुते नरः । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे ]कार्त्तिककृष्णरमैकादशी माहात्म्यं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥



# द्विषष्टितमोऽध्यायः

## कार्तिकशुक्लपक्षप्रबोधिन्येकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

श्रुतं रमाया महात्म्यं त्वत्तः कृष्ण यथातथम् । कार्त्तिकेशुक्लपक्षे या तां मे कथयमानद

श्रीकृष्ण उवाच

शृणुराजन्प्रवक्ष्यामि शुक्ले चोर्जदले तु या ।

सा यथा नारदायोक्ता ब्रह्मणा लोककारिणा ॥ २ ॥

नारद उवाच ।

प्रबोधिन्याश्च माहात्म्यं वद विस्तरतो मम । यस्यां जागर्ति गोविन्दो धर्मकर्मप्रवर्त्तकः

ब्रह्मोवाच ।

प्रबोधिन्याश्च माहात्म्यं पापघ्नं पुण्यवर्धनम् । मुक्तिप्रदं सुबुद्धीनां शृणुष्व मुनिसत्तम

तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च ।

यावत्प्रबोधिनी विष्णोस्तिथिर्नायाति कार्तिके ॥ ५ ॥

तावद्गर्जन्ति विप्रेन्द्र गङ्गाभागीरथीक्षितौ । यावन्नायाति पापघ्नी कार्तिकेहरिबोधिनी

अश्वमेधसहस्राणि राजसूयशतानि च । एकेनैवोपवासेन प्रबोधिन्या लभेन्नरः ॥ ७ ॥

यद्दुर्लभं यदप्राप्यं त्रैलोक्यस्य न गोचरम् ।

तदप्यप्रार्थितं पुत्र ! ददाति हरिबोधिनी ॥ ८ ॥

ऐश्वर्यं संपदं प्रज्ञां राज्यं च सुखसंपदः । ददात्युपोषिता भक्त्या जनेभ्यो हरिबोधिनी

मेरुमन्दरमात्राणि पापान्युक्तानि यानि च । एकेनैवोपवासेन दहते पापनाशिनी॥१०॥

पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितम् । निशि जागरणं चास्यादहतेतूलराशिवत् ॥

उपवासंप्रबोधिन्यां यः करोतिस्वभावतः । विधिवन्मुनिशार्दूलयथोक्तंलभतेफलम् ॥

यथोक्तं कुरुतेयस्तु विधिवत्सुकृतं नरः । स्वल्पं मुनिवरश्रेष्ठ ! मेरुतुल्यं भवेत्फलम् ॥

विधिहीनं तु यः कुर्यात्सुकृतं मेरुमात्रकम् । अणुमात्रं तदाप्नोति फलं धर्मस्य नारद ॥
ये ध्यायन्ति मनोवृत्त्या ये करिष्यन्ति बोधिनीम् ।
वसन्ति पितरो हृष्टा विष्णुलोके च तस्य वै ॥ १५ ॥
विमुक्ता नारकैर्दुःखैर्यान्ति विष्णोः परंपदम् । कृत्वा तु पातकंघोरं ब्रह्महत्यादिकंनरः
कृत्वातुजागरंविष्णोर्द्धौतपापोभवेन्नरः । दुष्प्राप्यं यत्फलं विप्र अश्वमेधादिकैर्मखैः ॥
प्राप्यते तत्सुखेनैव प्रबोधिन्यास्तु जागरे ।
आप्लुत्य सर्वतीर्थेषु प्रदाय काञ्चनं महीम् ॥ १८ ॥
यत्फलं समवाप्नोति तत्कृत्वा जागरं हरेः । जातः स एवसुकृतीकुलंतेनैवपावितम्
कार्तिके मुनिशार्दूल कृतायेन प्रबोधिनी । यथाध्रुवंनृणांमृत्युर्धनंगात्रंतथाध्रुवम् ॥२०
इति ज्ञात्वा मुनिश्रेष्ठ कर्त्तव्यं वैष्णवं दिनम् ।
यानि कानि च तीर्थानि त्रैलोक्ये संभवन्ति च ॥ २१ ॥
तानि तस्य गृहे सम्यग्यः करोति प्रबोधिनीम् ।
किं तस्य बहुभिः पुण्यैः कृता येन प्रबोधिनी ॥ २२ ॥
पुत्रपौत्रप्रदा ह्येषा कार्तिके हरिबोधिनी ।
स ज्ञानी च स योगी च स तपस्वी जितेन्द्रियः ॥ २३ ॥
भोगो मोक्षश्च तस्यास्ति य उपास्ते प्रबोधिनीम् ।
विष्णोः प्रियतरा ह्येषा धर्मसारसहायिनी ॥ २४ ॥
यः करोति नरो भक्त्या मुक्तिभाक्सभवेन्नरः। प्रबोधिनीमुपोषित्वागर्भे न विशते नरः
सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद । कर्मणा मनसा वाचा पापंयत्समुपार्जितम्
तत्क्षालयति गोविन्दः प्रबोधिन्यां तु जागरे ।
स्नानं दानं जपं पूजां समुद्दिश्य जनार्दनम् ॥ २७ ॥
नरो यत्कुरुतेवत्सप्रबोधिन्यांतदक्षयम् । येऽर्चयन्ति नरास्तस्यांभक्त्या देवं च माधवम्
समुपोष्य प्रमुच्यन्ते पापैस्तैः शतजन्मजैः । महाव्रतमिदं पुत्र महापापौघनाशनम् ॥
प्रबोधवासरं विष्णोर्विधिवत्समुपोषयेत् । व्रतेनानेन देवेशं परितोष्य जनार्दनम् ॥

विराजयन्दिशः सर्वाः प्रयाति हरिमन्दिरम् । कर्त्तव्यैषा प्रयत्नेन नरैः कान्तिधनार्थिभिः
बाल्ये यत्संचितं पापं यौवने वार्द्धके तथा । शतजन्मकृतं पापं स्वल्पं वा यदि वा बहु

तत्क्षालयति गोविन्दश्चास्यामभ्यर्चितो नृणाम् ।

धनधान्यवहा पुण्या सर्वपापहरा परा ॥ ३३ ॥

तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्क्वचित् । चन्द्रसूर्योपरागे च यत्फलं परिकीर्तितम्

तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां प्रजागरे ।

स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं हरेः ॥ ३५ ॥

तत्सर्वंकोटिगुणितं प्रबोधिन्यां कृतं तु यत् । जन्मप्रभृति यत्पुण्यं नरेणोपार्जितं भवेत्

वृथा भवति तत्सर्वमकृत्वा कार्तिके व्रतम् ।

अकृत्वा नियमं विष्णोः कार्तिकं यः क्षिपेन्नरः ॥ ३७ ॥

न जन्मार्जितपुण्यस्य फलं प्राप्नोति नारद । तस्मात्सर्वप्रयत्नेन देवदेवं जनार्दनम् ॥
उपसेवेत विप्रेन्द्र सर्वकामफलप्रदम् । परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतत्परः ॥३६॥
परान्नवर्जनाद्वत्स चान्द्रायणफलं लभेत् । नित्यं शास्त्रविनोदेन कार्त्तिकं यः क्षिपेन्नरः
स दहेत्सर्वपापानि यज्ञायुतफलं लभेत् । न तथा तुष्यते यज्ञैर्न दानै र्वा जपादिभिः ॥

यथाशास्त्रकथालापैः कार्त्तिके मधुसूदनः ।

ये कुर्वन्ति कथां विष्णोर्ये श्रृण्वन्ति शुभान्विताः ॥ ४२ ॥

श्लोकार्धं श्लोकपादं वा कार्त्तिके गोशतं फलम् ।

सर्वधर्मान्परित्यज्य कार्त्तिके केशवाग्रतः ॥ ४३ ॥

शास्त्रावधारणं कार्यं श्रोतव्यं च महामुने ! ।

श्रेयसा लोभबुद्ध्या च यः करोति हरेः कथाम् ॥ ४४ ॥

कार्त्तिके मुनिशार्दूल कुलानां तारयेच्छतम् । नियमेन नरो यस्तु श्रृणुते वैष्णवींकथाम्

कार्त्तिके तु विशेषेण गोसहस्रफलं लभेत् ।

प्रबोधवासरे विष्णोः श्रृणुते यो हरेः कथाम् ॥ ४६ ॥

सप्तद्वीपवतीदाने यत्फलं तल्लभेन्मुने ! ।

श्रुत्वा विष्णुकथां दिव्यां येऽर्चयन्ति कथाविदम् ॥ ४७ ॥
स्वशक्त्या मुनिशार्दूल तेषां लोकोऽक्षयः स्मृतः ।
गीतशास्त्रविनोदेन कार्त्तिकं यो नयेन्नरः ॥ ४८ ॥
न तस्य पुनरावृत्तिर्मया दृष्टा कलिप्रिय ! ।
गीतं नृत्यं च वाद्यं च भव्यां विष्णुकथां मुने ! ॥ ४९ ॥

यः करोति स पुण्यात्मा त्रैलोक्योपरि संस्थितः । बहुपुष्पैर्बहुफलैः कर्पूरागुरुकुङ्कुमैः
हरेः पूजा विधातव्या कार्त्तिके बोधवासरे । यस्मात्पुण्यमसङ्ख्यातं प्राप्यते मुनिसत्तम
फलैर्नानाविधैर्द्रव्यैः प्रवोधिन्यां तु जागरे । शङ्खे तोयं समादाय अर्घोदेयो जनार्दने ॥
यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलम् । तत्फलं कोटिगुणितं दत्त्वाऽर्घं बोधवासरे ॥
गुरुपूजा ततः कार्या भोजनाच्छादनादिभिः । दक्षिणाभिश्च देवर्षे तुष्ट्यर्थं चक्रपाणिनः
भागवतं शृणुते यस्तु पुराणं च पठेन्नरः । प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥

कार्त्तिके मुनिशार्दूल स्वशक्तया वैष्णवं व्रतम् ।
यः करोति यथोक्तं तु मुक्तिस्तस्य सुनिश्चला ॥ ५६ ॥

केतक्या एकपत्रेण पूजितो गरुडध्वजः । समाः सहस्रं सुप्रीतो भवति मधुसूदनः ॥
अगस्तिकुसुमैर्देवं पूजयेद्यो जनार्दनम् । दर्शनात्तस्य देवर्षे नरकाग्निः प्रणश्यति ॥५८॥
मुनिपुष्पार्चितो विष्णुः कार्त्तिके पुरुषोत्तमः । ददात्यभिमतान्कामाञ्छशिसूर्यग्रहे यथा
विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत्

तुलसीदलानि पुष्पाणि ये यच्छन्ति जनार्दने ।
कार्त्तिके सकलं पापं वत्सऽजन्मायुतं दहेत् ॥ ६१ ॥
दृष्टा स्पृष्टाथवा ध्याता कीर्तिता नामतः स्तुता ।
रोपिता सेचिता नित्यं पूजिता तुलसी शुभा ॥ ६२ ॥

नवधातुलसी भक्ति ये कुर्वन्ति दिने दिने । युगकोटिसहस्राणि तन्वन्ति सुकृतं मुने ॥
यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने । रोपिता तुलसीपुम्भिर्वर्धते वसुधातले ॥६४॥
तेषां वंशे तु ये जाता ये भविष्यन्ति ये गताः । आकल्पवर्षसाहस्रं तेषां वासो हरेर्गृहे

यत्फलं सर्वपुष्पेषु सर्वपत्रेषु नारद। तुलसीदलेन चैकेन कार्त्तिके प्राप्यते तु तत्॥

सम्प्राप्तं कार्त्तिकं दृष्ट्वा नियमेन जनार्दनः।
पूजनीयो महाविष्णुः कोमलैस्तुलसीदलैः॥ ६७॥

इष्ट्वा क्रतुशतैर्देवान्दत्त्वा दानान्यनेकशः। तुलसीदलैस्तु तत्पुण्यं कार्त्तिके केशवार्चने

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे कार्त्तिकशुक्लैकादशीमाहात्म्यं नाम द्विषष्टितमोऽध्यायः॥ ६२॥

---

## त्रिषष्टितमोऽध्यायः

### पुरुषोत्तममासकृष्णपक्षकमलैकादशीमाहात्म्यवर्णनम्

युधिष्ठिर उवाच।

भगवञ्छ्रोतुमिच्छामि व्रतानामुत्तमं व्रतम्। सर्वपापहरं विष्णोः फलदं व्रतिनां वयत्

पुरुषोत्तममासस्य कथां ब्रूहि जनार्दन। कोविधिः किं फलं तस्य को देवस्तत्र पूज्यते

अधिमासे च सम्प्राप्ते व्रतं ब्रूहि जनार्दन।
कस्य दानस्य किं पुण्यं किं कर्त्तव्यं नृभिः प्रभो!॥ ३॥

कथं स्नानं च किं जाप्यं कथं पूजाविधिः स्मृतः।
किंभोज्यमुत्तमं चान्नं मासेऽस्मिन्पुरुषोत्तमे॥ ४॥

श्रीकृष्ण उवाच।

कथयिष्यामि राजेन्द्र! भवतः स्नेहकारणात्।
पुरुषोत्तममासस्य माहात्म्यं पापनाशनम्॥ ५॥

अधिमासे तु संप्राप्ते भवेदेकादशी तु या।
कमला नाम सा नाम्ना तिथीनामुत्तमा तिथिः॥ ६॥

तस्या व्रतप्रभावेण कमलाभिमुखी भवेत्। ब्राह्मे मुहूर्ते चोत्थाय संस्मृत्य पुरुषोत्तमम्

स्नात्वा चैव विधानेन नियमं कारयेद्व्रती ।
गृहे त्वेकगुणं जाप्यं नद्यां तु द्विगुणं स्मृतम् ॥ ८ ॥
गवां गोष्ठे सहस्रोर्ध्वमग्न्यगारे शतान्वितम् । शिवक्षेत्रेषु तीर्थेषु देवतानां चसन्निधौ
लक्षं तुलस्याः सान्निध्ये ह्यनन्तं विष्णुसन्निधौ ।
अवन्त्यामभवत्कश्चिच्छिवशर्मा द्विजोत्तमः ॥ १० ॥
तस्यात्मजास्तु पञ्चासन्कनिष्ठो दोषवानभूत् ।
तदा पित्रा परित्यक्तस्त्यक्तः स्वजनबान्धवैः ॥ ११ ॥
कुकर्मणः प्रभावेण गतो दूरतरं वनम् । एकदा दैवयोगेन तीर्थराजं समागतः ॥१२॥
क्षुत्क्षामो दीनवदनस्त्रिवेण्यां स्नानमाचरत् ।
मुनीनामाश्रमांस्तत्र विचिन्वन्क्षुधयार्दितः ॥ १३ ॥
हरिमित्रमुनेस्तत्र ददर्शाश्रममुत्तमम् । पुरुषोत्तममासे वै जनानां च समागमे ॥ १४ ॥
तत्राश्रमे कथयतां कथां कल्मषनाशिनीम् । ब्राह्मणानां मुखात्तेन श्रद्धया कमलाश्रुता
एकादशी पुण्यतमा भुक्तिमुक्तिप्रदायिनी । जयशर्मा विधानेन श्रुत्वेमां कमलातिथिम्
एकादशी पुण्यतमा भुक्तिमुक्तिप्रदायिनी ।
व्रतकृतं च तैः सार्द्धं स्थित्वा शून्यालये तदा ॥ १७ ॥
निशीथे समनुप्राप्ते लक्ष्मीस्तत्र समागता । वरं ददामि भोविप्र कमलायाःप्रभावतः

जयशर्मोवाच ।

का त्वं कस्यासि रम्भोरु प्रसन्नात्र कथं मम । इन्द्राणी सुरनाथस्यभवानी शङ्करस्यवा
गन्धर्वी किन्नरी वाथ वधूर्वा चन्द्रसूर्ययोः ।
त्वत्सदृक्षा न दृष्टा च न श्रुता च शुभानने ! ॥ २० ॥

लक्ष्मीरुवाच ।

प्रसन्ना साम्प्रतं जाता वैकुण्ठादहमागता । प्रेरिता देवदेवेन कमलायाः प्रभावतः ॥२१
पुरुषोत्तममासस्य या पक्षे प्रथमे भवेत् । तस्या व्रतन्त्वया चीर्णं प्रयागे मुनिसंनिधौ
व्रतस्यास्य प्रभावेण वशगाऽहं न संशयः । तव वंशे भविष्यन्ति मातवा द्विजसत्तम ।

मत्प्रासादादवाप्स्यन्ति सत्यं ते व्याहृतं मया ॥ २३ ॥

ब्राह्मण उवाच ।

प्रसन्ना यदि मे पद्मे व्रतं विस्तरतो वद । यत्कथासु प्रवर्तन्ते साधवो ये जना द्विजाः

लक्ष्मीरुवाच ।

श्रोतॄणां परमं श्राव्यं पवित्राणामनुत्तमम् । दुःस्वप्ननाशनं पुण्यं श्रोतव्यं यत्नतस्ततः

उत्तमःश्रद्धयायुक्तःश्लोकं श्लोकार्धमेव वा । पठित्वा मुच्यतेसद्यो महापातककोटिभिः

मासानां परमो मासः पक्षिणां गरुडो यथा ।

नदीनां च यथा गङ्गा तिथीनां द्वादशीतिथिः ॥ २७ ॥

अद्यापि निर्जराःसर्वे भारते जन्मलिप्सवः । तमर्चयन्ति विविधा नारायणमनामयम् ॥

ये यजन्ति सदा भक्त्या देवं नारायणं प्रभुम् । तानर्चयन्ति सततं ब्रह्माद्या देवतागणाः

येऽपि नामपरा ये च हरिकीर्त्तनतत्पराः । हरिपूजापरा ये च ते कृतार्थाःकलौयुगे ॥

शुक्ले वा यदि वा कृष्णे भवेदेकादशी द्वयम् ।

गृहस्थानां भवेत्पूर्वा यतीनामुत्तरा स्मृता ॥ ३१ ॥

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतंपुण्यं त्रयोदश्यां तु पारणे ॥

एकादश्यां निराहारःस्थित्वाहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत

अमुं मन्त्रं समुच्चार्य देवदेवस्य चक्रिणः । भक्तिभावेन तुष्टात्मा उपवासं समाचरेत्

कुर्याद्देवस्य पुरतो जागरं नियतो व्रती । गीतैर्वाद्यैश्च नृत्यैश्च पुराणपठनादिभिः ॥३५

ततः प्रातः समुत्थाय द्वादशी दिवसे व्रती ।

स्नात्वा विष्णुं समभ्यर्च्य विधिवत्प्रयतेन्द्रियः ॥ ३६ ॥

पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम् । द्वादश्यां च पयःस्नानाद्धरेःसारूप्यमश्नुते

अज्ञानतिमिरान्धस्य व्रतेनानेन केशव । प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥३८

एवं विज्ञाप्य देवेशं देवदेवं गदाधरम् । ब्राह्मणान्भोजयेद्भक्त्यातेभ्यो दद्याच्च दक्षिणाम्

ततःस्वबन्धुभिःसार्धं नारायणपरायणः । कृत्वा पञ्चमहायज्ञान्स्वयं भुञ्जीत वाग्यतः ॥

एवं यःप्रयतःकुर्यात्पुण्यमेकादशी व्रतम् । स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् ॥

इत्युक्त्वा कमला तस्मै वरं दत्त्वा तिरोदधे ।
सोऽपि विप्रो धनी भूत्वा पितुर्गेहं समागतः ॥ ४२ ॥

श्रीकृष्ण उवाच ।

एवं यःकुरुते राजन्कमलाव्रतमुत्तमम् । शृणुयाद्वासरे विष्णोःसर्वपापैःप्रमुच्यते ॥ ४३

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-नारदसंवादे पुरुषोत्तममासस्य कृष्णाकमलैकादशीमाहात्म्यं नाम त्रिषष्टितमोऽध्यायः

---

## चतुःषष्टितमोऽध्यायः

### पुरुषोत्तममासशुक्लपक्षकामदैकादशीमाहात्म्यवर्णनम् ।

युधिष्ठिर उवाच ।

श्रुतानि बहुधर्माणि व्रतानि च जगत्प्रभो । एकादशी समं किंचिच्छ्रुतं नैव जनार्दन ॥
पुनस्त्वेकादशीं ब्रूहिपापघ्नीं पुण्यदायिनीम् । यां कृत्वामनुजोलोके प्राप्नुयात्परमंपदम्

श्रीकृष्ण उवाच ।

शुक्ले वा यदि वा कृष्णे यदा चैकादशी भवेत् ।
न त्याज्या जगतीपाल मोक्षसौख्यविवर्धनी ॥ ३ ॥

एकादशी कलौ राजन्भवबन्धविमोचिनी । कामदा सर्वकामानांपापानां पापहा भुवि
रविवारेऽथ माङ्गल्ये संक्रमे वा नृपोत्तम । एकादशी सदोपोष्या पुत्रपौत्रविवर्धनी ॥

एकादशी व्रतं क्वापि न त्याज्यं विष्णुवल्लभैः ।
आयुः कीर्तिप्रदं नित्यं सन्तानारोग्यवित्तदम् ॥ ६ ॥

मोक्षदं रूपदं राजन्नित्यमेकादशी व्रतम् । ये कुर्वन्ति महीपाल श्रद्धया परयायुताः ॥७

यथोक्तविधिना लोके ते नरा विष्णुरूपिणः ।
जीवन्मुक्तास्तु भूपाल दृश्यन्ते नात्र संशयः ॥ ८ ॥

युधिष्ठिर उवाच ।

जीवन्मुक्ताःकथं कृष्ण विष्णुरूपाःकथं पुनः । पापरूपाश्च दृश्यन्ते परं कौतूहलं हि मे

श्रीकृष्ण उवाच ।

ये च राजन्कलौ भक्त्या निर्जलं व्रतमुत्तमम् । एकादश्याःप्रकुर्वन्ति विधिदृष्टेन कर्मणा
न कथं विष्णुरूपास्ते जीवन्मुक्ताःकथं न हि । सर्वपापहरं पुण्यं व्रतमेकादशी समम्
न किंचिद्विद्यते राजन्सर्वकामप्रदं नृणाम् । एकाशनं दशम्यां च नन्दायां निर्जलं व्रतम्

पारणं चैव भद्रायां कृत्वा विष्णुसमा नराः ।

श्रद्धावान्यस्तु कुरुते कामदाया व्रतं शुभम् ॥ १३ ॥

वाञ्छितं लभते सोऽपि इहलोके परत्र च । पवित्रा पावनी ह्येषा महापातकनाशिनी॥
भुक्तिमुक्तिप्रदा चैव कर्तॄणां नृपसत्तम । कामदायां विधानेन पूजयेत्पुरुषोत्तमम् ॥१५
पुष्पधूपादिभिश्चैव नैवेद्यैर्विविधैस्तथा । कांस्यमांसमसूरांश्च चणकान्कोद्रवांस्तथा ॥
शाकं मधु परान्नं च पुनर्भोजनमैथुनम् । वैष्णवो व्रतकर्त्ता च दशम्यां दशवर्जयेत् ॥
द्यूतं क्रीडां तथा निद्रां ताम्बूलं दन्तधावनम् । परापवादं पैशुन्यंस्तेयं हिंसांतथारतिम्

क्रोधं च वितथं वाक्यमेकादश्यां विवर्जयेत् ।

कांस्यं मासं मसूरांश्च तैलं वितथभाषणम् ॥ १६ ॥

व्यायामं च प्रवासं च पुनर्भोजनमैथुनम् । वृषपृष्ठं परान्नं च शाकं च द्वादशीदिने ॥२०
अनेन विधिना राजन्विहितायैश्च कामदा। रात्रौ जागरणं कृत्वा पूजितःपुरुषोत्तमः ॥
सर्वपापविनिर्मुक्तास्तेयान्ति परमां गतिम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां षष्ठे उत्तरखण्डे उमापति-
नारदसंवादे पुरुषोत्तममासस्य शुक्लाकामदा नामैकादशीमाहात्म्यं नाम
चतुःषष्टितमोऽध्यायः ॥६४॥

———

## पञ्चषष्टितमोऽध्यायः

### चातुर्मास्यव्रतविधिवर्णनम्

नारद उवाच ।

चातुर्मास्ये तु नियमा ये केचिद्भुवि विश्रुताः । तानहं श्रोतुमिच्छामि कथयस्व महेश्वर
चातुर्मास्ये हरौ सुप्ते कर्तव्यं किं जनार्दने । षड्रसानां परित्यागे नखकेशविधारणे ॥
अन्यैश्च नियमैः स्वामिन्यत्फलं तद्वदाधुना ॥ २ ॥

सूत उवाच ।

एतच्छ्रुत्वा त्वसौ देवःप्रहस्योत्फुल्ललोचनः । प्रोवाच तं द्विजवरं नारदं तपसांनिधिम्

महादेव उवाच ।

शृणु त्वमिह देवर्षे कथयामि सविस्तरम् । आषाढस्य सितेपक्षे एकादश्यामुपोषितः
चातुर्मास्यव्रतानीह गृह्णीयाद्भक्तिपूर्वकम् । भूमिशय्यासमारूढो योगनिद्रां गते हरौ ॥
नयेत चतुरोमासान्यावद्भवति कार्तिकी । प्रतिष्ठा न प्रवर्त्तन्ते तथा यज्ञादिकाःक्रियाः ॥

विवाहव्रतसम्बन्धा अन्यन्माङ्गल्यकर्म च ।
भूपयानं तथा यात्रा अन्याश्च विविधाः क्रियाः ॥ ७ ॥

प्रसुप्ते च जगन्नाथे त्वच्युते गरुडध्वजे । व्रतक्रियां चरेद्यस्तु तस्य व्रतफलं शृणु ॥
अश्वमेधसहस्रैस्तु यत्फलं प्राप्नुयान्नरः । चातुर्मास्य व्रतैश्चीर्णैस्तत्फलं समवाप्नुयात्
मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् । तुलाराशौ गतेसूर्ये पुनरुत्थापयेद्धरिम् ॥ १०
अधिमासे तु पतिते तदा चैष विधिक्रमः । स्थापयेत्प्रतिमां विष्णोःशङ्खचक्रगदाधराम्
पीताम्बरधरां सौम्यांपर्यङ्के स्थापयेच्छुचौ । श्वेतवस्त्रसमाच्छन्ने सोपधाने तु नारद ॥
इतिहासपुराणज्ञो विष्णुभक्तोऽथवा पुनः । स्नापयित्वा दधिक्षीरमधुलाजघृतैस्तथा ॥
समालभ्य शुभैर्गन्धैर्धूपैःपुष्पैर्मनोरमैः । पूजितां कुसुमैःशुभ्रैर्मन्त्रेणानेन वाडव ॥ १४ ॥

सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् ।

विबुद्धे त्वयि बुध्येत जगत्सर्वं चराचरम् ॥ १५ ॥
एवं तां प्रतिमां विष्णोः स्थापयित्वा तु नारद ।
तस्यैवाग्रे स्वयं वाचा गृह्णीयान्नियमं ततः ॥ १६ ॥
स्त्री वा नरो वा तद्भक्तो धर्माधर्मविभागतः ।
चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि ॥ १७ ॥
गृह्णीयान्नियमानेतान्दन्तधावन पूर्वकम् । उपवासं ततःकृत्वा प्रभाते विमले सति ॥
नित्यं कर्म चरित्वा तु विष्णोरग्रे जितात्मवान् ।
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक्पृथक् ॥ १९ ॥
मधुरत्वं लभेद्विद्वान्पुरुषो गुडवर्जनात् । तथैव सन्ततिं दीर्घां तैलस्य वर्जनाद्यतः ॥२०
घृतस्य वर्जनाद्विप्र सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागी शत्रुनाशमवाप्नुयात् ॥२१॥
सुगन्धतैलत्यागेन सौभाग्यमतुलं लभेत् । पुष्पभोगपरित्यागी स्वर्गे विद्याधरो भवेत् ॥
योगाभ्यासी नरो यस्तु स ब्रह्मपदमाप्नुयात् ।
कट्वम्लमधुरक्षारतीक्ष्णकाषायषड्रसान् ॥ २३ ॥
वर्जयेद्यस्तु वैरूप्यं दौर्गन्ध्यं नाप्नुयान्नरः । ताम्बूलवर्जनाद्भोगी रक्तकण्ठस्तु जायते ॥
घृतत्यागाच्च लावण्यं सदा स्निग्धतनुर्भवेत् । फलत्यागाच्चविप्रेन्द्र बहुपुत्रश्च जायते
पलाशपत्राशनकृद्रूपवान्भोगवान्भवेत् । दीप्तिमान्दीप्तिकरणः साक्षाद्द्रव्यपतिर्भवेत् ॥
दधिदुग्धपरित्यागी गोलोकं लभते नरः ।
मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् ॥ २७ ॥
इन्द्रासनमवाप्नोति स्थालीपाकस्य वर्जनात् । एवमादिपरित्यागाद्धर्मस्थो धर्मनन्दनः
नमो नारायणायेति जप्त्वाशतगुणंफलम् । एक एव स वै स्वर्गे विद्याधरपतिर्भवेत् ॥
पुष्करः स्नानमात्रेण गङ्गायाःस्नानजं फलम् ।
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्यधिपो भवेत् ॥ ३० ॥
विष्णोश्चैव गृहे कुर्यादुपलेपनमार्जनम् । कल्पस्थायी भवेद्विद्वन्वैकुण्ठे नात्र संशयः ॥
प्रदक्षिणं च यःकुर्याच्छतमष्टोत्तरं नरः । हंसयुक्तविमानेन दिव्येन सह गच्छति ॥३२॥

मृद्धाधातुविकारैश्च कल्पकोटिं वसेद्दिवि । ये तु संवत्सरं पूर्णमग्निहोत्रमुपासते ॥१०॥
कार्त्तिके स्वस्तिकं कृत्वा सममेतन्न संशयः । अगम्यागमने चैव ह्यभक्ष्यस्य तु भक्षणे
तत्पापं नाशमायाति मण्डयित्वा हरेर्गृहम् । मण्डलं कुरुते नित्यं या नारी केशवाग्रतः
सप्तजन्मानि वैधव्यं न प्राप्नोति कदाचन ॥ १२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कार्त्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे शालग्राममाहात्म्यं नाम विंशत्यधिकशततमोऽध्यायः ॥१२० ॥

---

# एकविंशत्यधिकशततमोऽध्यायः

## दीपगन्धधात्रीमाहात्म्यम्

ईश्वर उवाच ।

धात्रीच्छायां समाश्रित्य कुर्यात्पिण्डं तु यो गुह ।
मुक्तिं प्रयान्ति पितरःप्रसादान्माधवस्य तु ॥ १ ॥
मूर्ध्नि पाणौ मुखे चैव देहे चैव तु यो नरः । धत्ते धात्रीफलं वत्स धात्रीफलविभूषितः
धात्रीफलकृताहारो नरो नारायणो भवेत् । यःकश्चिद्वैष्णवो लोके धत्ते धात्रीफलं गुह
प्रियो भवति देवानां मनुष्याणां च का कथा ।
न जह्यात्तुलसीमालां धात्रीमालां विशेषतः ॥ ४ ॥
यावत्तिष्ठति कण्ठस्था धात्रीमाला नरस्य हि । तावत्तस्य शरीरे तु प्रतिष्ठति च केशवः
धात्रीफलं तु तुलसी मृत्तिका द्वारकोद्भवा । सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि
यावद्दिनानि वहते धात्रीमालां कलौ नरः । तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत्॥
मालायुग्मं वहेद्यस्तु धात्रीतुलसिसंभवम् । वहते कण्ठदेशे तु कल्पकोटिं वसेद्दिवि ॥

संनियम्येन्द्रियग्रामं शालग्रामशिलार्चनम् ।
यः कुर्यान्मानवो भक्त्या पुष्पे पुष्पेऽश्वमेधजम् ॥ ९ ॥
सुराणां च यथा विष्णुः पुष्पाणां तुलसी तथा ।
तुलस्याऽनुदिनं देवं योऽर्चयेद्गरुडध्वजम् ॥ १० ॥

जन्मदुःखजरारोगैर्मुक्तोऽसौ मुक्तिमाप्नुयात्। तुलसीमालया विष्णुः पूजितो येन कार्तिके
यमाक्षरकृतां मालां स्फुटं शौरि प्रमार्ष्टि हि । श्रीचन्दनं सकर्पूरमगुरुं च सकुङ्कुमम् ॥
केतकीदीपदानं च सर्वदा केशवप्रियम् । कार्तिके केतकीपुष्पं दत्तं येन कलौ युगे ॥
दीपदानं महासेन कुलानां तारयेच्छतम् । सरोरुहाणि तुलसी केतकी मुनिपुष्पकम् ॥
कार्त्तिके च दिनान्येव दीपदानं तु पञ्चमम् । केतकीमालया येन कार्त्तिके पुष्पमण्डपम्
केशवस्य कृतं वत्स वसतिर्दिवि तस्य च । केतकीपुष्पकेनैव पूजितो गरुडध्वजः ॥
समाः सहस्रं सुप्रीतो जायते मधुसूदनः । अर्चयित्वा हृषीकेशं कुसुमैः केतकीभवैः ॥
पुण्यं तद्भवनं याति केशवस्य शिवं गुह । दमनकेनापि देवेशं संप्राप्ते मधुमाधवे ॥१८॥
गोशतस्य मुनिश्रेष्ठ ह्यर्चनाल्लभते फलम् । अगस्तिकुसुमैर्देवं योऽर्चयेत जनार्दनम् ॥
दर्शनात्तस्य भो विप्र नरकाग्निः प्रणश्यति । न तत्करोति विप्रर्षे तपसा तोषितो हरिः
यत्करोति महासेन मुनिपुष्पैरलङ्कृतः । विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् ॥

कार्त्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत् ।
मुनिपुष्पकृतां मालां यो ददाति जनार्दने ॥ २२ ॥

देवेन्द्रोऽपि मुनिश्रेष्ठ कुरुते तस्य सत्कथाम् । गवामयुतदानेन यत्फलं प्राप्यते गुह ॥
मुनिपुष्पेण चैकेन कार्त्तिके लभते फलम् । कौस्तुभेन यथा प्रीतो यथा च वनमालया
तुलसीदलेन संप्रीतः कार्त्तिके च तथा हरिः ॥ २४ ॥

सूत उवाच ।

प्रश्रयावनतं दृष्ट्वा कुमारं भक्तितत्परम् । पुनः प्रोवाच भगवान्महादेवो वृषध्वजः ॥२५॥

ईश्वर उवाच ।

शृणु दीपस्य माहात्म्यं कार्त्तिके शिखिवाहन !

पितरश्चैव वाञ्छन्ति सदा पितृगणैर्वृताः ॥ २६ ॥

भविष्यति कुलेऽस्माकं पितृभक्तःसुपुत्रकः । कार्त्तिके दीपदानेन यस्तोषयति केशवम्
घृतेन दीपको यस्य तिलतैलेन वा पुनः । ज्वलते यस्य सेनानीरश्वमेधेन तस्य किम् ॥
तेनेष्टं क्रतुभिःसर्वैःकृतं तीर्थावगाहनम् । दीपदानं कृतं येन कार्त्तिके केशवाग्रतः ॥

कृष्णपक्षे विशेषेण पुत्र पञ्चदिनानि च ।

पुण्यानि तेषु यो दत्ते दीपं सोऽक्षयमाप्नुयात् ॥ ३० ॥

एकादश्यां परैर्दत्तं दीपं प्रज्वाल्य मूषिका । मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा
लुब्धकोऽपि चतुर्दश्यां पूजयित्वा महेश्वरम् । निर्भक्षःपरमं प्राप्य विष्णुलोकं जगामसः

श्वपाकी स्वाश्रयाद्वेश्या दीपं कृत्वा परैःकृतम् ।

शुद्धा लीलावती भूत्वा जगाम स्वर्गमक्षयम् ॥ ३३ ॥

गोपःकश्चिदमायां तु पूजां दृष्ट्वा तु शार्ङ्गिणः । मुहुर्मुहुर्जयेत्युक्त्वा राजराजेश्वरोऽभवत्
तस्माद्दीपाःप्रदातव्या रात्रावस्तमिते रवौ । गृहेषु सर्वगोष्ठेषु सर्वेष्वायतनेषु च ॥
देवालयेषु देवानां श्मशानेषु सरस्सु च । घृतादिना शुभार्थाय यावत्पञ्चदिनानि च ॥
पापिनःपितरो ये च लुप्तपिण्डोदकक्रियाः । तेऽपियान्ति परां मुक्तिं दीपदानस्य पुण्यतः
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कार्त्तिकमाहात्म्ये
दीपगन्धधात्रीमाहात्म्यवर्णनं नाम एकविंशत्यधिकशततमोऽध्यायः ॥१२१॥

---

## द्वाविंशत्यधिकशततमोऽध्यायः

### दीपावलिमाहात्म्यवर्णनम्

कार्त्तिकेय उवाच ।

दीपावलिफलं नाथ विशेषाद्ब्रूहि साम्प्रतम् ।

किमर्थं क्रियते सा तु तस्याःका देवता भवेत् ॥ १ ॥

किं च तत्र भवेद्देयं किं न देयं वद प्रभो । प्रहर्षः कोऽत्र निर्दिष्टः क्रीडा कात्र प्रकीर्तिता

सूत उवाच ।

इति स्कन्दवचः श्रुत्वा भगवान्कामशोषणः । साधूक्त्वा कार्त्तिकं विप्राः प्रहसन्निदमब्रवीत्

श्रीशिव उवाच ।

कार्त्तिकस्यासितेपक्षे त्रयोदश्यां तु पावके । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥४॥
मृत्युना पाशहस्तेन कालेन भार्यया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति ॥
कार्त्तिके कृष्णपक्षे च चतुर्दश्यां विधूदये । अवश्यमेव कर्त्तव्यं स्नानं च पापभीरुभिः॥
पूर्वविद्धा चतुर्दश्याः कार्त्तिकस्यासितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यादतन्द्रितः ॥७॥

तैले लक्ष्मीर्जले गङ्गा दीपावल्यां चतुर्दशीम् ।
प्रातःस्नानं हि यः कुर्याद्यमलोकं न पश्यति ॥ ८ ॥

अपामार्गस्तथा तुम्बी प्रपुन्नाटं च वाह्वलम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै
सीतालोष्टसमायुक्त सकण्टकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥
अपामार्गं प्रपुन्नाटं भ्रामयेच्छिरसोपरि । ततश्च तर्पणं कार्यं यमराजस्य नामभिः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
नरकाय प्रदातव्यो दीपः संपूज्य देवताः । ततः प्रदोषसमये दीपान्दद्यान्मनोहरान् ॥१४॥
ब्रह्मविष्णुशिवादीनां भवनेषु विशेषतः । कूटागारेषु चैत्येषु सभासु च नदीषु च ॥
प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च । मन्दुरासु विविक्तासु हस्तिशालासु चैव हि

एवं प्रभातसमये ह्यमावास्यां तु पावके ।
स्नात्वा देवान्पितॄन्भक्त्या संपूज्याऽथ प्रणम्य च ॥ १७ ॥
कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः ।
भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमापयेत् ॥ १८ ॥

ततोऽपराह्णसमये पोषयेन्नागरान्प्रिय । तेषां गोष्ठीं च मानं च कृत्वा संभाषणं नृपः
चक्रूणां वत्सरं यावत्प्रीतिरुत्पद्यते गुह । अप्रबुद्धे हरौ पश्चं स्त्रीभिर्लक्ष्मीः प्रबोधयेत्॥

प्रबोधसमये लक्ष्मीं बोधयित्वा तु सुस्त्रिया। पुमान्वै वत्सरं यावल्लक्ष्मीस्तं नैव मुञ्चति

अभयं प्राप्य विप्रेभ्यो विष्णुभीताः सुरद्विषः।

सुप्तं क्षीरोदधौ ज्ञात्वा लक्ष्मीं पद्माश्रितां तथा॥ २२॥

त्वं ज्योतिःश्रीरविश्चन्द्रो विद्युत्सौवर्णतारकः।

सर्वेषां ज्योतिषां ज्योतिर्दीपज्योतिःस्थिता तु या॥ २३॥

या लक्ष्मीर्दिवसे पुण्ये दीपावल्यां च भूतले।

गवां गोष्ठे तु कार्त्तिक्यां सा लक्ष्मीर्वरदा मम॥ २४॥

शङ्करश्च भवानी च क्रीडया द्यूतमास्थितौ। भवान्याभ्यर्चिता लक्ष्मीर्धेनुरूपेण संस्थिता

गौर्या जित्वा पुरा शम्भुर्नग्नो द्यूते विसर्जितः।

अतोऽयं शंकरो दुःखी गौरी नित्यं सुखे स्थिता॥ २६॥

प्रथमं विजयो यस्यास्तस्य संवत्सरं सुखम्। एवं गते निशीथे तु जने निद्रार्धलोचने

तावन्नगरनारीभिस्तूर्यडिण्डिमवादनैः। निष्कास्यते प्रहृष्टाभिरलक्ष्मीश्च गृहाङ्गणात्

पराजये विरुद्धं स्यात्प्रतिपद्युदिते रवौ। प्रातर्गोवर्धनः पूज्यो द्यूतं रात्रौ समाचरेत्

भूषणीयास्तथा गावो वर्ज्या वहनदोहनात्। गोवर्धनधराधार गोकुल त्राणकारक॥

विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव। या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता

घृतं वहति यज्ञार्थे मम पापं व्यपोहतु। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः॥

गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥ ३२॥

इति गोवर्धनपूजा।

सद्भावेनैव संतोष्य देवान्सत्पुरुषान्नरान्। इतरेषामन्नपानैर्वाक्यदानेन पण्डितान्॥

वस्त्रैस्ताम्बूलदीपैश्च पुष्पकर्पूरकुङ्कुमैः। भक्ष्यैरुच्चावचैर्भोज्यैरन्तःपुरनिवासिनः॥

वृषभान्ग्रासदानैश्च सामन्तान्नृपतिर्धनैः। पदाति जनसङ्घांश्च ग्रैवेयःकटकैःशुभैः॥३५॥

स्वानमात्यांश्च तान्राजा तोषयेत्स्वजनान्पृथक्।

यथाऽथ तोषयित्वा तु ततो मल्लान्नटांस्तथा॥ ३६॥

वृषभांश्च महोक्षांश्च युध्यमानान्परैःसह। राजन्यांश्चापि योधांश्च पदातीन्समलङ्कृतान्

मञ्चारूढःस्वयं पश्येन्नटनर्तकचारणान् । योधयेद्वासयेच्चैव गोमहिष्यादिकं च यत्
वत्सानाकर्षयेद्गोभिरुक्तिप्रत्युक्तिवादनात् । ततोऽपराह्नसमये पूर्वस्यां दिशि पावके ॥
मार्गपालीं प्रबध्नीयाद्दुर्गस्तम्भेऽथ पादपे । कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्गुह ॥

वीक्षयित्वा गजानश्वान्मार्गपाल्यास्तले नयेत् ।
गावैर्वृषांश्च महिषान्महिषीर्घण्टिकोत्कटाः ॥ ४१ ॥

कृतहोमैर्द्विजेन्द्रैस्तु बध्नीयान्मार्गपालिकाम् । नमस्कारं ततःकुर्यान्मन्त्रेणानेन सुव्रतः
मार्गपालि नमस्तुभ्यं सर्वलोक सुखप्रदे । मार्गपालीतले स्कन्द यान्ति गावो महावृषाः
राजानो राजपुत्राश्च ब्राह्मणाश्च विशेषतः । मार्गपालीं समुल्लङ्घ्य नीरुजःसुखिनो हि ते
कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कुर्यात्ततःसाक्षाद्भूमौमण्डलके कृते ॥
बलिमालिख्य दैत्येन्द्रं वर्णकैःपञ्चरङ्गकैः । सर्वाभरणसंपूर्णं विन्ध्यावलिसमन्वितम्
कूष्माण्डमयजम्भोरु मधुदानव संवृतम् । संपूर्णं हृष्टवदनं किरीटोत्कटकुण्डलम् ॥

द्विभुजं दैत्यराजं च कारयित्वा स्वके पुनः ।
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ॥ ४८ ॥

मातृभ्रातृजनैःसार्धं सन्तुष्टो बन्धुभिःसह । कमलैःकुमुदैःपुष्पैःकह्लारै रक्तकोत्पलैः ॥
गन्धपुष्पान्ननैवेद्यैःसक्षीरैर्गुडपायसैः । मद्यमांससुरालेह्यचोष्यभक्ष्योपहारकैः ॥५० ॥

मन्त्रेणानेन राजेन्द्रः समन्त्री सपुरोहितः ।
पूजां करिष्यते यो वै सौख्यं स्यात्तस्य वत्सरम् ॥ ५१ ॥

बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम् ॥
एवं पूजाविधिं कृत्वा रात्रौ जागरणं ततः । कारयेद्वै क्षणं रात्रौ नटनर्तकगायकैः ॥

लोकैश्चापि गृहस्यान्ते सपर्यां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजं तु फलैःपुष्पैश्च पूजयेत् ॥ ५४ ॥

बलिमुद्दिश्य वै तत्र कार्यं सर्वं च पावके । यानि यान्यक्षयाण्याहुर्मुनयस्तत्त्वदर्शिनः ॥
यदत्र दीयते दानं स्वल्पं वा यदि वा बहु । तदक्षयं भवेत्सर्वं विष्णोःप्रीतिकरं शुभम्
रात्रौ ये न करिष्यन्ति तव पूजां बले नराः । तेषामश्रोत्रियं धर्मं सर्वं त्वामुपतिष्ठतु ॥

विष्णुना च स्वयं वत्स तुष्टेन बलये पुनः। उपकारकरं दत्तमसुराणां महोत्सवम् ॥
तदा प्रभृति सेनानीःप्रवृत्ता कौमुदी सदा। सर्वोपद्रवविद्रावा सर्वविघ्नविनाशिनी ॥
लोकशोकहरा काम्या धनपुष्टिसुखावहा। कुशब्देन मही ज्ञेया मुदहर्षे ततो द्वयम् ॥

धातुत्वे निगमैश्चैव तेनैषा कौमुदी स्मृता।
कौ मोदन्ते जना यस्मान्नानाभावैःपरस्परम् ॥ ६१ ॥

हृष्टतुष्टाःसुखापन्नास्तेनैषा कौमुदी स्मृता। कुमुदानि बलेर्यस्यां दीयन्ते तेन षण्मुख
अर्घार्थं पार्थिवैःपुत्र तेनैषा कौमुदी स्मृता। एकमेवमहोरात्रं वर्षे वर्षे च कार्तिके॥६३
दत्तं दानवराजस्य आदर्शमिव भूतले। यःकरोति नृपो राज्ये तस्य व्याधिभयं कुतः ॥
सुभिक्षं क्षेममारोग्यं तस्य संपदनुत्तमा। नीरुजश्च जनाःसर्वे सर्वोपद्रववर्जिताः ॥६५॥
कौमुदी क्रियते तस्माद्भावं कर्तुं महीतले। यो यादृशेन भावेन तिष्ठत्यस्यां च षण्मुख
हर्षदुःखादिभावेन तस्य वर्षं प्रयाति हि। रुदिते रोदते वर्षं हृष्टे वर्षं प्रहर्षितम् ॥६७॥

भुक्ते भोक्ता भवेद्वर्षं स्वस्थे स्वस्थं भविष्यति।
तस्मात्प्रहृष्टैःकर्त्तव्या कौमुदी च शुभैर्नरैः ॥ ६८ ॥
वैष्णवी दानवी चेयं तिथिःप्रोक्ता च कार्तिके ॥ ६९ ॥
दीपोत्सवं जनितसर्वजनप्रसादं कुर्वन्ति ये शुभतया बलिराजपूजाम्।
दानोपभोगसुखबुद्धिमतां कुलानां हर्षं प्रयातिसकलं प्रमुदं च वर्षम् ॥७०॥

स्कन्दैतास्तिथयो नूनं द्वितीयाद्याश्च विश्रुताः। मासैश्चतुर्भिश्च ततःप्रावृट्काले शुभावहाः
प्रथमा श्रावणे मासि तथा भाद्रपदे परा। तृतीयाश्वयुजे मासि चतुर्थी कार्तिके भवेत्
कलुषा श्रावणे मासि तथा भाद्रपदेऽमला। आश्विने प्रेतसंचारा कार्तिके याम्यकामता

गुह उवाच।

कस्मात्सा कलुषा प्रोक्ता कस्मात्सा निर्मला मता।
कस्मात्सा प्रेतसंचारा कस्माद्याम्या प्रकीर्तिता ॥ ७४ ॥

सूत उवाच।

इति स्कन्दवचःश्रुत्वा भगवान्भूतभावनः। उवाच वचनं श्लक्ष्णं प्रहसन्वृषभध्वजः ॥

महेश उवाच ।

पुरा वृत्रवधे वृत्ते प्राप्ते राज्यं पुरन्दरे । ब्रह्महत्यापनोदार्थमश्वमेधः प्रवर्त्तितः ॥ ७६ ॥

क्रोधादिन्द्रेण वज्रेण ब्रह्महत्या निषूदिता ।

षड्विधा सा क्षितौ क्षिप्ता वृक्षतोयमहीतले ॥ ७७ ॥

नार्यां वह्नौ भ्रूणहनि संविभज्य यथाक्रमम् । तत्पापश्रवणात्पूर्वं द्वितीयाया दिनेन च
नारीवृक्षनदीभूमि वह्निभ्रूणहनस्तथा । कलुषीभवनं जातो ह्यतोऽथ कलुषा स्मृता ॥
मधुकैटभयोरक्ते पुरा मग्नानुमेदिनी । अष्टाङ्गुला पवित्रा सा नारीणां तु रजोमलम् ॥
नद्यःप्रावृण्मलाःसर्वा वह्नेरूर्ध्वं मषीमलः । निर्यासमलिना वृक्षाःसङ्गाद्भ्रूणहनोमलाः ॥

कलुषा विचरन्त्यस्यां तेनैषा कलुषा मता ।

देवर्षिपितृधर्माणां निन्दका नास्तिकाःशठाः ॥ ८२ ॥

तेषां सा वाङ्मलात्पूता द्वितीया तेन निर्मला । अनध्यायेषु शास्त्राणि पाठयन्ति पठन्ति च

साङ्ख्यकास्तार्किकाःश्रौतास्तेषां शब्दापशब्दजात् ।

मलात्पूता द्वितीयायां ततोऽर्थे निर्मला च सा ॥ ८४ ॥

कृष्णस्य जन्मना वत्स त्रैलोक्यं पावितं भवेत् ।

नभस्येते विनिर्दिष्टा निर्मला सा तिथिर्बुधैः ॥ ८५ ॥

अग्निष्वात्ता बर्हिषद आज्यपाःसोमपास्तथा । पितॄन्पितामहान्प्रेतसंचारात्प्रेतसंचरा ॥
प्रेतास्तु पितरःप्रोक्तास्तेषां तस्यां तु संचरः । पुत्रपौत्रैस्तु दौहित्रैःस्वधामन्त्रैस्तु पूजिताः
श्राद्धदानमखैस्तृप्ता यान्त्यतःप्रेतसंचरा । महालये तु प्रेतानां संचारो भुवि दृश्यते ॥
तेनैषा प्रेतसंचारा कीर्तिता शिखिवाहन । यमस्य क्रियते पूजा यतोऽस्यां पावके नरैः

तेनैषा याम्यका प्रोक्ता सत्यं सत्यं मयोदितम् ।

एतत्कार्त्तिकमाहात्म्यं ये शृण्वन्ति नरोत्तमाः ॥ ९० ॥

कार्त्तिकस्नानजं पुण्यं तेषां भवति निश्चितम् । कार्त्तिके च द्वितीयायां पूर्वाह्णे यममर्चयेत्
भानुजायां नरःस्नात्वा यमलोकं न पश्यति । कार्त्तिके शुक्लपक्षे तु द्वितीयायां तु शौनक
यमो यमुनया पूर्वं भोजितःस्वगृहेऽर्चिता । द्वितीयायां महोत्सर्गो नारकीयाश्च तर्पिताः

पापेभ्यो विप्रयुक्तास्ते मुक्ताःसर्वनिबन्धनात् ।
आशंसिताश्च संतुष्टाःस्थिताःसर्वे यदृच्छया ॥ ९४ ॥
तेषां महोत्सवो वृत्तो यमराष्ट्रे सुखावहः । अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ॥
तस्मान्निजगृहे विप्र न भोक्तव्यं ततो बुधैः । स्नेहेन भगिनी हस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्
दानानि च प्रदेयानि भगिनीभ्यो विधानतः । स्वर्णालङ्कारवस्त्राणि पूजासत्कारसंयुतम्
भोक्तव्यं सहजायाश्च भगिन्याहस्ततःपरम् । सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्धनम्
ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः । महिषासनमारूढो दण्डमुद्गरभृत्प्रभुः ॥९९॥
वेष्टितःकिङ्करैर्हृष्टैस्तस्मै याम्यात्मने नमः। यैर्भगिन्यःसुवासिन्यो वस्त्रदानादितोषिताः
न तेषां वत्सरं यावत्कलहो न रिपोर्भयम् । धन्यं यशस्यमायुष्यं धर्मकामार्थसाधनम्
व्याख्यातं सकलं पुत्र सरहस्यं मयाऽनघ ! ॥ १०२ ॥
यस्यां तिथौ यमुनया यमराजदेवःसंभोजितःप्रतितिथौ स्वसृसौहृदेन ।
तस्मात्स्वसुःकरतलादिह यो हि भुङ्क्ते प्राप्नोति वित्तशुभसंपदमुत्तमां सः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
कार्त्तिकमाहात्म्ये द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

## त्रयोविंशत्यधिकशततमोऽध्यायः

### प्रबोधिन्येकादशीमाहात्म्यवर्णनम्

ईश्वर उवाच ।

प्रबोधिन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम् । मुक्तिदं तत्त्वबुद्धीनां शृणुष्व सुरसत्तम
तावद्गर्जति सेनानीर्गङ्गा भागीरथी क्षितौ । यावन्नायाति पापघ्नी कार्त्तिके हरिबोधिनी
तावद्गच्छन्ति तीर्थानि आसमुद्रसरांसि च ।

यावत्प्रबोधिनी विष्णोस्तिथिर्नायाति कार्त्तिके ॥ ३ ॥
अश्वमेधसहस्राणि राजसूयशतानि च । एकेनैवोपवासेन प्रबोधिन्यां यथाभवत् ॥४॥
दुर्लभं चैव दुष्प्राप्यं त्रैलोक्ये सचराचरे । तदपि प्रार्थितं विप्र ददाति प्रतिबोधिनी ॥
ऐश्वर्यं संस्तृति ज्ञानं राज्यं च सुखसंपदम् । ददात्युपोषिता विप्र हेलया हरिबोधिनी
मेरुमन्दरतुल्यानि पापान्युपार्जितानि च । एकेनैवोपवासेन दहते हरिबोधिनी ॥ ७ ॥
उपवासं प्रबोधिन्यां यःकरोति स्वभावतः । विधिना नरशार्दूल यथोक्तं लभते फलम्
पूर्वजन्मसहस्रेषु पापं यत्समुपार्जितम् । जागरेण प्रबोधिन्यां दह्यते तूलराशिवत् ॥
शृणु षण्मुख वक्ष्यामि जागरस्य च लक्षणम् । यस्य विज्ञानमात्रेण दुर्लभो न जनार्दनः
गीतं वाद्यं च नृत्यं च पुराणपठनं तथा । धूपं दीपं च नैवेद्यं पुष्पं गन्धानुलेपनम् ॥

फलमर्घ्यं च श्रद्धा च दानमिन्द्रियसंयमः ।
सत्यान्वितं विनिद्रं च मुदायुक्तं क्रियान्वितम् ॥ १२ ॥

साश्चर्यंचैव सोत्साहमालस्यादिविवर्जितम् । प्रदक्षिणादिसंयुक्तं नमस्कारपुरःसरम्
नीराजनसमायुक्तमनिर्विण्णेन चेतसा । यामे यामे महाभाग कुर्वन्नीराजनं हरेः ॥१४॥
एतैर्गुणैःसमायुक्तं कुर्याज्जागरणं विभोः । एकाग्रमानसो यस्तु न पुनर्जायते भुवि ॥
य एवं कुरुते भक्त्या वित्तशाठ्यविवर्जितः । जागरं वासरे विष्णोर्नीयते परमां गतिम्
पुरुषसूक्तेन यो नित्यं कार्त्तिके त्वर्चयेद्धरिम् । वर्षकोटिसहस्राणि पूजितस्तेन केशवः
यथोक्तेन विधानेन पञ्चरात्रोदितेन वै । कार्त्तिके त्वर्चयेन्नित्यं मुक्तिभागी भवेन्नरः ॥
नमो नारायणायेति कार्त्तिके योऽर्चयेद्धरिम् । समुक्तो नारकैर्दुःखैःपदंगच्छत्यनामयम्
हरेर्नाम सहस्रं च गजराजस्य मोक्षणम् । कार्तिके पठते यस्तु पुनर्जन्म न विन्दति ॥
युगकोटिसहस्राणि मन्वन्तरशतानि च । द्वादश्यां कार्त्तिके मासि जागरी वसते दिवि

कुले तस्य च संजाताःशतशोऽथ सहस्रशः ।
प्राप्नुवन्ति पदं विष्णोस्तस्मात्कुर्वीत जागरम् ॥२२॥

कार्त्तिके पश्चिमेयामे स्तवं गानं करोति यः । श्वेतद्वीपे तु वसते पितृभिःसह भामिनि
नैवेद्यदानं हरये कार्त्तिके दिनसंक्षये । युगानि वसते स्वर्गे तावन्ति मुनिसत्तमाः ॥

अक्षयं मुनिशार्दूल मालतीकमलार्चनम् । अर्चयेद्देवदेवेशं स याति परमं पदम् ॥ २५ ॥
कार्त्तिके शुक्लपक्षे तु कृत्वा ह्येकादशीं नरः ।
प्रातर्दत्त्वा शुभान्कुम्भान्स याति मम मन्दिरम् ॥ २६ ॥

कार्त्तिकेय उवाच ।

भगवन्नुच्यतां पुण्यं व्रतानां परमं व्रतम् । कर्तव्यं कार्त्तिके मासि भवता भीष्मपञ्चकम्
विधानं तस्य च फलं तथैव सुरसत्तम । कथयस्व प्रसादान्मे मुनीनां च पितामह ॥

ईश्वर उवाच ।

प्रवक्ष्यामि महापुण्यं व्रतं विधिमतांवर । भीष्मेणैतद्यतःप्राप्तं व्रतं पञ्चदिनात्मकम् ॥
सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान्वक्तुं कःशक्तःकेशवादृते
कार्त्तिके शुक्लपक्षे तु शृणु धर्मं पुरातनम् । वसिष्ठभृगुगर्गाद्यैश्चीर्णं कृतयुगादिषु ॥३१॥
अम्बरीषेण भोगाद्यैश्चीर्णं त्रेतायुगादिषु । ब्राह्मणैर्ब्रह्मचर्येण जपहोमक्रियादिभिः ॥३२
क्षत्रियैश्च तथा वैश्यैःसत्यशौचपरायणैः । दुष्करं सत्यहीनानामशक्यं बालचेतसाम्
दुष्करं भीष्ममित्याहुर्न शक्यं प्राकृतैर्नरैः । यस्तत्करोति विप्रेन्द्र तेन सर्वं कृतं भवेत्
व्रतंचैतन्महापुण्यं महापातकनाशनम् । अतो नरैःप्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् ॥३५

कार्त्तिकस्यामलेपक्षे स्नात्वा सम्यग्विधानतः ।
एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ॥ ३६ ॥
प्रातःस्नात्वा विशेषेण मध्याह्ने च तथा व्रती ।
नद्यां निर्झरगर्ते वा समालभ्य च गोमयम् ॥ ३७ ॥

यवव्रीहितिलैःसम्यक्पितॄन्संतर्पयेत्क्रमात् । स्नात्वा मौनं नरःकृत्वा धौतवासा दृढव्रतः
भीष्मायोदकदानं च अर्घ्यंचैव प्रयत्नतः । पूजा भीष्मस्य कर्त्तव्या दानं दद्यात्प्रयत्नतः
पञ्चरत्नं विशेषेण दत्त्वा विप्राय यत्नतः । वासुदेवोऽपि संपूज्यो लक्ष्मीयुक्तःसदा प्रभुः

पञ्चके पूजयित्वा तु कोटिकल्पानि तुष्यति ।
यत्किञ्चित्क्रियते सर्वं पञ्चधा तु प्रकल्पयेत् ॥ ४१ ॥

संवत्सरव्रतानां च लभते सकलं फलम् । कृत्वा तूदकदानं तु तथार्घ्यस्य च दापनम्

मन्त्रेणानेन यःकुर्यान्मुक्तिभागी भवेन्नरः ॥ ४३ ॥

वैयाघ्रपादगोत्राय साङ्कृतेःप्रवराय च । अपुत्राय ददाम्येतदुदकं भीष्मवर्मणे ॥ ४४॥

वसूनामवताराय शन्तनोरात्मजाय च । अर्घ्यं ददामि भीष्माय ह्याजन्मब्रह्मचारिणे॥

इत्यर्घ्यमन्त्रः ।

अनेन विधिना यस्तु पञ्चकं तु समापयेत् । अश्वमेधसमं पुण्यं प्राप्नोत्यत्र न संशयः॥

पञ्चाहमपि कर्तव्यं नियमं च प्रयत्नतः । नियमेन विना पुत्र न भाव्यं व्रतकर्मणा॥

उत्तरायणहीनाय भीष्माय प्रददौ हरिः । उत्तरायणहीनोऽपि शुद्धिं लग्नं विना शुभाः

ततःसंपूजयेद्देवं सर्वपापहरं हरिम् । अनन्तरं प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ॥ ४९ ॥

स्नापयेत जलैर्भक्त्या मधुक्षीरघृतेन च । तथैव पञ्चगव्येन गन्धचन्दनवारिणा ॥५० ॥

चन्दनेन सुगन्धेन कुङ्कुमेनाथ केशवम् । कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् ॥ ५१ ॥

अर्चयेद्रुचिरैःपुष्पैर्गन्धधूपसमन्वितैः । गुग्गुलुं घृतसंयुक्तं दहेत्कृष्णाय भक्तिमान् ॥५२

दीपकं तु दिवारात्रौ दद्यात्पञ्चदिनादिषु । नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् ॥५३॥

एवमभ्यर्चयेद्देवं संस्मृत्य च प्रणम्य च । ॐनमो वासुदेवाय जपेदष्टोत्तरंशतम् ॥५४॥

जुहुयाच्च घृताभ्यक्तैस्तिलव्रीहियवादिभिः । षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च॥

उपास्य पश्चिमां सन्ध्यां प्रणम्य गरुडध्वजम् ।

जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेद्व्रती ॥ ५६ ॥

सर्वमेतद्विधानं तु कार्यं पञ्चदिनानि तु । विशेषोऽत्र व्रते ह्यस्मिन्यदन्यूनं शृणुष्व तत्

प्रथमेऽह्नि हरेःपादौ पूजयेत्कमलैर्व्रती । द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् ॥५८

ततोऽनुपूजयेच्छीर्षं मालतीकुसुमैर्हरेः । कार्त्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः ॥५९

अर्चित्वा तं हृषीकेशमेकादश्यां समासतः । निष्प्राश्य गोमयंसम्यगेकादश्यामुपावसेत्

गोमूत्रं मन्त्रवद्भूमौ द्वादश्यां प्राशयेद्व्रती । क्षीरंचैव त्रयोदश्यां चतुर्दश्यां तथा दधि

संप्राश्य कायशुद्ध्यर्थं लङ्घःस्थित्वा चतुर्दिनम् ।

पञ्चमे दिवसे स्नात्वा विधिवत्पूज्य केशवम् ॥ ६२ ॥

भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।

पापबुद्धिं परित्यज्य ब्रह्मचर्येण धीमता ॥ ६३ ॥

मद्यं मांसं परित्यज्य मैथुनं पापकारिणः । शाकाहारेण मुन्यन्नैः कृष्णार्चनपरो नरः ॥
ततो नक्तं समश्नीयात्पञ्चगव्यपुरःसरम् । एवं सम्यक्समाप्तस्य यथोक्तं फलमाप्नुयात्
मद्यपो यत्पिबेन्मद्यं जन्मनो मरणान्तिकम् । एतद्भीष्मव्रतं कृत्वा प्राप्नोति परमं पदम्॥
स्त्रीभिर्ब्राह्मणवाक्येन कर्तव्यं धर्मवर्धनम् । विधवाभिश्च कर्तव्यं मोक्षसौख्याभिवृद्धये
सर्वकामसमृद्ध्यर्थं पुण्यार्थमपि पावके । नित्यस्नाने तथा दाने ये कार्त्तिकमुपासते
वैश्वदेवश्च कर्तव्यो विष्णुध्यानपरायणैः । आरोग्यपुत्रदो वत्स महापातकनाशनः ॥
तीर्थेषु कार्त्तिकं कुर्यात्सर्वयत्नेन षण्मुख । संवत्सरव्रतानां तु समाप्तिःकार्त्तिके मता

पापस्य प्रतिमा कार्या रौद्रवक्त्रातिभीषणा ।
खड्गहस्ता विनिष्क्रान्ता लोहदंष्ट्रा करालिनी ॥ ७१ ॥
तिलप्रस्थोपरि स्थाप्या कृष्णवस्त्राभिवेष्टिता ।
रक्तपुष्पकृता पीडा ज्वलत्काञ्चनकुण्डला ॥ ७२ ॥

संपूज्य परया भक्त्या धर्मराजस्य नामभिः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः ॥७४ ॥

एवं संपूज्य विधिवत्प्रतिमां तां च काञ्चनीम् ।
कृत्वा पूजां यथाशक्ति विप्राणां वेदवादिनाम् ॥ ७५ ॥

प्रीतये देवदेवस्य कृष्णस्याक्लिष्टकर्मणः । ब्राह्मणाय प्रदातव्यं धर्मो मे प्रीयतामिति ॥
वाचकाय प्रदातव्या यथाशक्ति च दक्षिणा । दद्याद्धिरण्यं गाश्चैव कृष्णो मे प्रीयतामिति

इति पाठः ।

कृतकृत्यःस्थितो भूत्वा विरक्तःसंयतो भवेत् । अन्येषामपि दातव्यं स्वशक्त्या दानमुत्तमम्
शान्तचित्तो निराबाधःपरं पदमवाप्नुयात् । नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः॥७६॥
अष्टपादैकनयनःशङ्कुकर्णःखरस्वनः । जडी द्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः ॥८० ॥
चिन्तनीयो महादेवो यस्य रूपं न विद्यते । इदं भीष्मेण कथितं शरतल्पगतेन मे॥८१॥
तदेतत्ते मयाऽऽख्यातं दुष्करं भीष्मपञ्चकम् । धन्यं पुण्यं पापहरं युधिष्ठिर! महाव्रतम्

यत्कृत्वा ब्रह्महा गोघ्नः सर्वपापैः प्रमुच्यते ॥ ८२ ॥

यद्भीष्मपञ्चकमिति प्रथितं पृथिव्यामेकादशीप्रभृतिपञ्चदशीनिरुद्धम् ।

उक्तं न भोजनपरस्य तदा निषेधस्तस्मिन्व्रते शुभफलं प्रददाति विष्णुः॥८३

सूत उवाच ।

एतत्सर्वाधिकं पुण्यं दुर्लभं भुवने कृतम् । इदं गुह्यं मयाख्यातं शास्त्रसारसमुच्चयम् ॥

सुराणां गोपितं सर्वमतिगुह्यं च मोक्षदम् । श्रुत्वा चैकपदे देवि अगस्त्यागमने रताः ॥

कन्याविक्रीःस्वसाविक्रीर्ह्यभयं तु विमोचयेत् । मोक्षदं च इदं शास्त्रं प्रकाश्यं नेतरे जने

श्रुत्वा चैकपदे यस्तु मोक्षं गच्छति मानवः ।

गोपनीयं प्रयत्नेन ये चापि त्यागिनो नराः ॥ ८७ ॥

न तेषां कथ्यते पुण्यं सत्यं सत्यं च षण्मुख ।

इत्येतत्सर्वमाख्यातं कार्त्तिकस्य तु यत्फलम् ॥ ८८ ॥

श्रीविष्णुरुवाच ।

कथितं देवदेवेन पुत्राय हितकाम्यया । पितुस्तद्वाक्यमाकर्ण्य षण्मुखो हर्षनिर्भरः ॥

ऊचुःप्राञ्जलयःसर्वे तं देवं जगदायुषम् । कृतकृत्या वयं जाताःश्रुत्वा कार्त्तिकजं फलम्

अपरं नास्ति श्रोतव्यं नःप्राप्तं जन्मनःफलम् । माहात्म्यमेतदाकर्ण्य पूजयेद्यस्तु पाठकम्

गोभूहिरण्यवस्त्रैश्च विष्णुतुल्यो यतो हि सः ।

वाचके पूजिते यस्माद्विष्णुर्भवति पूजितः ॥ ९२ ॥

तथा तं पूजयेन्नित्यं यदीच्छेत्सफलं शुभम् । धर्मशास्त्रं पुराणं च वेदविद्यादिकं च यत्

पुस्तकं वाचकायैव दातव्यं धर्ममिच्छता । पुराणविद्यादातारो ह्यनन्तफलभोजिनः ॥

यःपठेत इदं भक्त्या श्रुत्वा चैवावधारयेत् । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति

धनंधान्यं यशःपुत्रानायुरारोग्यमेव च । माहात्म्यश्रवणादेव लभ्यते च न संशयः ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरखण्डे कार्त्तिकमाहात्म्ये

श्रीकृष्णसत्यभामासंवादे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

# चतुर्विंशत्यधिकशततमोऽध्यायः

## माघमासमाहात्म्यवर्णनम्

ऋषय ऊचुः ।

सूतसूत महाभाग त्वया लोकहितैषिणा । कथितं कार्त्तिकाख्यानं भुक्तिमुक्तिप्रदायकम्
अधुना माघमाहात्म्यं वद नो लोमहर्षणे । श्रुतेन येन लोकानां संशयःक्षीयते महान् ॥

पुरा केन महाभाग लोकेऽस्मिन्संप्रकाशितम् ।

माघस्नानस्य माहात्म्यं सेतिहासं तदाऽऽदिश ॥ ३ ॥

सूत उवाच ।

साधुसाधु मुनिश्रेष्ठा यूयं कृष्णपरायणाः। यत्पृच्छथ मुदायुक्ता भक्त्या कृष्णकथा मुहुः

कथयिष्यामि माघस्य माहात्म्यं पुण्यवर्धनम् ।

पापघ्नं शृण्वतां पुंसां स्नातानां चारुणोदये ॥ ५ ॥

एकदा पार्वती विप्राःशङ्करं लोकशङ्करम् । पप्रच्छ विनयोपेता स्पृष्ट्वा तच्चरणाम्बुजम् ॥

पार्वत्युवाच ।

देवदेव महादेव भक्तानामभयप्रद । प्रसीद नाथ विश्वेश यत्पृच्छे तद्वदाऽधुना ॥ ७ ॥

श्रुता नानाविधा धर्मास्त्वत्तःपूर्वं मया विभो ।

अधुना श्रोतुमिच्छामि माहात्म्यं माघजं वद ॥ ८ ॥

तत्तु केन पुरा चीर्णं को विधिः का च देवता ।

तत्सर्वं विस्तराद्ब्रूहि यतस्त्वं भक्तवत्सलः ॥ ९ ॥

महेश उवाच ।

अध्वराऽवभृथस्नात ऋषिभिःकृतमङ्गलः । पूजितो नागरैःसर्वैःस्वपुरान्निर्गतो बहिः ॥

दिलीपो भूभृतां श्रेष्ठो मृगयारसिको नृपः । कौतूहलसमाविष्ट :आखेटव्यूहसंवृतः॥११

उपानद् गूढपादस्तु नीलोष्णीष उरच्छदी । बद्धगोधाङ्गुलित्राणो धनुष्पाणिःसरीसृपः

वद्धक्षुद्रासि धानुष्कैस्तथा भूपैश्च पत्तिभिः। गान्धारेषु सुरम्येषु वनेषु विपुलेषु च
उल्लङ्घितमहास्रोता युवा पञ्चास्यविक्रमः।
मुदा क्रीडति तैःसार्धं कुञ्जेषु मृगयन्मृगान् ॥ १४ ॥
हन्यतां हन्यतामेष मृगो वैष पलायते। इति जल्पन्स्वभृत्येषु स्वयमुत्पत्य हन्ति च ॥
इतस्ततःपुनर्याति क्वचित्पश्यन्वनस्थलीम्। विटपोड्डीनसंत्रस्त लीनकेकिकुलाकुलाम् ॥
हरिणीगणवित्रस्तां धावच्छावकदिङ्मुखाम्।
क्वचित्फेरवफेत्कारताराराववि भीषणाम् ॥ १७ ॥
खड्गयूथैःक्वचिल्लक्ष्मीं दधानामिव दन्तिनाम्। क्वचित्कोटरसंदष्टोलूकनादविनादिनीम्
मृगारीपदमुद्राभिर्मुद्रितां च क्वचित्क्वचित्। शार्दूलनखनिर्भिन्नरोहिद्रक्तारुणां क्वचित् ॥
पीवरस्तनभारार्तसुस्निग्धमहिषीगणैः। अवरोधाजिरक्षोणीं सूचयन्तीं मनःक्वचित् ॥
क्वचिद्वृक्षघनच्छन्नां वन्यपुष्पसुगन्धिनीम्। क्वचिल्लतागृहद्वारां भृङ्गशब्दसुशोभनाम्
अर्धनिःसृतनिर्मोकनागभीमबृहद्विलाम्। विलेषु लीनाजगरैर्भीमां निर्मोकसर्पिणीम्
क्वचिद्दावानलज्वालां शिलाज्योतिःसुशोभनाम्।
फूत्कारशब्दसंपूर्णमृगव्याघ्रसमाकुलाम् ॥ २३ ॥
प्रविमुञ्चन्छुनां यूथं शशकेषु क्वचित्क्वचित्। पल्वलेषु च विश्रम्य पुनर्याति वनान्तरम्
एवं व्रजति राजेन्द्रे व्याधवर्गे च वल्गति। कुर्वन्कोलाहलं तत्र सारङ्गो निर्गतो वनात्
स्फालवेगक्रमाक्रान्तदुर्गमार्गमहीतलः। कदाचिद्गगनारूढःकदाचिद्भूमिगोचरः ॥२६॥
वक्रस्रोतोऽतिगम्भीरं कण्टकद्रुमसङ्कुलम्। प्रविष्टो विषमारण्यं राजाऽसौ तत्पदानुगः
दूराद्दूरंतरं गत्वा देशाद्देशं च निर्जनम्। मृगादर्शनसंरम्भसंशुष्कगलकन्धरः ॥२८ ॥
ताम्रतालुमुखःस्विन्नःश्रान्तपत्तिःस्खलद्ध्वनिः। अतीत्य दीर्घमार्गान्स तृषार्तो मध्यगे रवौ
ददर्शाऽग्रे तु कासारं स्पर्धयन्तमपांपतिम्। घनपादपतीरस्थं सुतीर्थं विमलं शुभम् ॥
विशालं विकचाम्भोजं मधुमत्तमधुव्रतम्। पद्मिनीपत्रपालाशच्छन्नं मरकतैरिव ॥३१
स्वच्छन्दमुच्चलन्मत्स्यं स्वच्छं साधुमनो यथा।
चलज्जलचरैर्मिश्रं वीचिराजिविराजितम् ॥ ३२ ॥

अन्तर्ग्राहगणक्रूरं खलानामिव मानसम्। क्वचिच्छैवालदुर्गम्यं कृपणस्येव मन्दिरम् ॥
नानाविहङ्गसर्वार्ति शमयन्तं दिवानिशम्। दातारमिव सर्वस्वैरापन्नार्तिप्रणाशनम् ॥
तर्पयन्तं निजाम्भोभिःश्वापदान्स्वपितॄनिव। हरन्तं सर्वसंतापं हिमांशुमिव चाह्निकम्
तं दृष्ट्वा भूद्गताग्लानिश्चातको जलदं यथा। तत्र पीतजलो राजा कृतमाध्याह्निकक्रियः॥
भुक्त्वा खेटकमांसानि सहायैःसहितो नृपः। उवास सरसस्तीरे सुरम्यां कथयन्कथाम्
ततःशरासने बाणं कृत्वा रात्रौ स्थितस्तरौ। व्याधाःसंधानमास्थाय रुरुधुःककुभां पथः
एवं स्थितेषु वीरेषु वने विस्तार्यवागुराम्। निशार्धे निर्गतं यूथं सूकराणां तटेतटे ॥

चरित्वा सरसीकन्दान्पपात व्याधसङ्कुले।
राज्ञा विद्धाश्च ते क्रोडा व्याधैश्च बहवो हताः ॥४७ ॥

क्षणेनैव वराहास्ते विद्धाःपेतुर्महीतले। तान्दृष्ट्वा तुमुलं नादं व्याधाश्चक्रुःसुदर्पिताः ॥
धावन्तःप्रमुदायुक्ता मिलिता यत्र भूपतिः। तानादाय भटैर्भूयो निःसृतःसरसीतटात्
स्वपुरं गन्तुकामोऽसौ दृष्टवान्पथि तापसम्। ब्राह्मणं वृद्धहारीतं शङ्खचक्रसुशोभितम्
नियमैर्दुष्करैरुग्रैः परिक्षीणकलेवरम्। अस्थिशेषं महादान्तं विस्फुरत्कर्कशत्वचम् ॥
दधानं हारिणं चर्म वसानं मृदुवल्कलम्। कुर्वाणं नैगमं जाप्यं नखलोमजटाधरम् ॥

तं वनाश्रमिणं दृष्ट्वा मार्गं दत्त्वा स संभ्रमः।
प्रणम्य शिरसा राजा कृतपद्माञ्जलिःस्थितः ॥ ४८ ॥

अथ चैनमलङ्कारैर्द्विजो निश्चित्य भूमिपम्। उवाच श्रेयसे हेतोःपरोपकृतिवाञ्छया ॥
किमर्थं गम्यते राजन्काले पुण्यतमे शुभे। माघमासे विहायैव प्रातःस्नानं सरोवरे ॥

प्रत्युवाच ततो राजा नाहं जाने द्विजोत्तम !!।
माघस्नानफलं कीदृक्तन्मे कथय विस्तरात् ॥ ४९ ॥

इति भूपवचःश्रुत्वा प्राह वैखानसो मुनिः। भगवान्द्युमणिःशीघ्रमभ्युदेति तमोऽपहा ॥

स्नानकालोऽयमस्माकं न कथावसरो नृप !।
स्नात्वा गच्छ वसिष्ठं तं पृच्छस्व स्वकुलप्रभुम् ॥ ५१ ॥
इत्युक्त्वा तापसो मौनी प्रातःस्नानाय निर्गतः।

प्रत्यावृत्य दिलीपोऽपि तत्र स्नात्वा यथाविधि ॥ ५२ ॥
पुनःस्वनगरीं वीरो गतोऽसौ हर्षपूरितः । अन्तःपुरे निवेद्याथ वानप्रस्थकथां पुनः ॥
श्वेताश्वरथमारुह्य सुश्वेतच्छत्रचामरः । सालङ्कारःसुवासाश्च संवृतो मन्त्रिभिःसह ॥
जयशब्दान्पुनःशृण्वन्स्तुतो मागधवन्दिभिः । वसिष्ठस्याश्रमं यात ऋषिवाक्यमनुस्मरन्
तत्रैव नत्वा ब्रह्मर्षिं विनयाचारपूर्वकम् । दत्तासनो गृहीतार्घ्य आशीर्भिःसमलङ्कृतः॥
सानन्दं मुनिना पृष्टःकुशलं भूपतिर्यदा । तदाऽब्रवीद्वचो राजा हर्षयन्मुनिमानसम् ॥
सोऽपि वैखानसेनोक्तं पप्रच्छ मधुराकृतिः ॥ ५७ ॥

दिलीप उवाच ।

भगवंस्त्वत्प्रसादेन श्रुता विस्तरतो मया । आचारो दण्डनीतिश्च राजधर्माश्च ये परे
चतुर्णामपि वर्णानामाश्रमाणां च याःक्रियाः ।
दानानि तद्विधानानि यज्ञाश्च विधयस्तथा ॥ ५६ ॥
व्रतानि तत्प्रदिष्टानि विष्णोराराधनं तथा ।
अधुना श्रोतुमिच्छामि माघस्नाने च यत्फलम् । विधेयं यद्विधानेन तन्मे ब्रह्मन्मुने वद

वसिष्ठ उवाच ।

सम्यगुक्तं परं श्रेयो लोकत्रयहितावहम् । निर्मलीकरणं तेन मुनिना वनवासिना॥६१॥
कटाक्षैःकामिनीनां ते प्रत्यासन्नमखण्डिताः । कामयन्ते मृगार्के ते स्रोतसि स्नातुमेव च
विना वह्निं विनायज्ञमिष्टापूर्तं विना प्रिये । वाञ्छन्ति सद्गतिं स्नातुं प्रातर्माघे बहिर्जले
गोभूहिरण्यमाणिक्यस्वर्णधेन्वादिकानि ये ।
अदत्त्वेच्छन्ति चैकार्णे माघं स्नाता नराधिप ! ॥ ६४ ॥
त्रिःसप्ताहव्रतैःकृच्छ्रैःपराकैश्च निजां तनुम् ।
अशोष्येच्छन्ति ये स्वर्गं तपसि स्नान्तु ते सदा ॥ ६५ ॥
हरेःपूजा च वैशाखे तपःपूजा च कार्त्तिके । तपोहोमस्तथा दानं त्रयं माघे विशिष्यते
सानुबन्धोऽतिपर्यासो धराधीशो भवेद्ध्रुवम् ।
कैवल्योत्पादकाबुद्धिर्यया वा न भवेत्पुनः ॥ ६७ ॥

पद्भ्या वरिवस्या सा विहिता दिव्यलोचनैः । तदनन्तं तपोदानं माघेमासि नृपोत्तम॥
सकामो वा प्रजा ये वा हरये तद्विनापि वा ।
कायशुद्धि व्रतीभूत्वा चतुर्धा स्नानजं फलम् ॥ ६६ ॥
निरन्ना अदितिःसस्नौ माघे द्वादशवत्सरे । पुत्रांश्च द्वादशादित्याँल्लेभे त्रैलोक्यदीपकान्
सुभगा रोहिणी माघा दानशीला त्वरुन्धती । शची च रूपसंपन्ना प्रासादे सप्तभूमिके
विमलीकृतशोभाढ्ये नर्तकीललिताजिरे । द्वीपवर्णसमुच्छिन्ने रूपवत्स्त्रीजनाकुले ॥
गीतवादित्रनिर्घोषे मङ्गलाचारशोभिते । वेदध्वनिपवित्रे च विद्वद्भिरलङ्कृते ॥ ७३॥
सुरार्चनरते रम्ये सदातिथिनिषेविते । मुदितास्ते वसन्तीह यैःस्नातं मकरे रवौ॥७४॥
यैर्दत्तं बहु माघे च मुरारिश्चार्चितःस्तुतः । इष्टवस्तुपरित्यागान्नियमस्य तु पालनात् ॥
धर्मसूतिःसदामाघःपापमूलंनिकृन्तति । काममूलःफलद्वारा निष्कामो ज्ञानदः सदा ॥
ये लोका ज्ञानशीलानां ये लोका विपिनौकसाम् ।
ये लोका विष्णुभक्तानां ते माघस्नायिनां सदा ॥ ७७ ॥
देवलोकान्निवर्तन्ते पुण्यैरन्यैःपरन्तप । कदाचिन्न निवर्तन्ते माघस्नानरता नराः ॥७८॥
माघे स्नात्वा तु यो धेनुं दद्यान्मर्त्यःपयस्विनीम् ।
तस्या यावन्ति रोमाणि सर्वाङ्गे च नृपोत्तम ॥ ७९ ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । माघस्नानं प्रकुर्वाणो यो दद्यात्सगुडांस्तिलान्
पातकं तस्य प्रक्षाल्य निर्मलो भाति वै नरः ।
सर्वेषां धान्यराशीनां तिलाःपापप्रणाशनाः ॥ ८१ ॥
तस्मान्माघे प्रयत्नेन तिलादेया नृपोत्तम । माघस्नानं प्रकुर्वाणो दद्याद्ब्राह्मणभोजनम्
पितॄन्संतर्प्य शुद्धात्मा याति विष्णोःपरंपदम् । तस्मात्सर्वप्रयत्नेन माघोदानेन नीयते
अदानं न क्षिपेन्माघं सर्वदा नृपसत्तम । वित्तानुसारं ज्ञात्वा वै माघे दानं सदा ददेत्
माघस्नानं तु यःकुर्यादुपानत्ककमण्डलून् । ददाति ब्राह्मणेभ्यश्च स स्वर्गे तिष्ठतिध्रुवम्
माघस्नानमयं राजन्कुर्वाणस्तप उत्तमम् । दानं विना क्षिपेन्नैव दानात्स्वर्गमवाप्यते ॥
दानेन प्राप्यते स्वर्गो दानेन प्राप्यते सुखम् । दानेन हीयते पापं महापातकजं नृप॥८७

अदानं न तपो भाति ह्यसूर्यं गगनं यथा । असन्ततिकुलं यद्वदाचारेण विना गृहम् ॥
नातःपरतरं किंचित्पवित्रं पापनाशनम् । विद्याधराय सगीतं भृगुणा मणिपर्वते ॥

राजोवाच ।

ब्रह्मन्कदा भृगुर्विप्रो निजगाद महीधरे । तस्मै धर्मोपदेशं च कथ्यतां मे कुतूहलात् ॥

वसिष्ठ उवाच ।

द्वादशाब्दं पुरा राजन्न ववर्ष बलाहकः । तेनोद्विग्नाःप्रजाःक्षीणा गताःसर्वा दिशो दश ॥
खिलीभूते तदा मध्ये हिमवद्विन्ध्ययोर्नृप ! । स्वाहास्वधावषट्कार वेदाध्ययनवर्जिते ॥
सोपप्लवे तदा लोके लुप्तधर्मे च निष्प्रभे । फलमूलान्नपानीयशून्ये वै भूमिमण्डले ॥
विन्ध्यपादतरुच्छन्नरम्यरेवातटाश्रमात् । सहशिष्यैश्च निर्गम्य हिमाद्रिं स गतो भृगुः
तत्र तिष्ठति कैलासगिरेःपश्चिमतो गिरिः । मणिकूट इति ख्यातो हेमरत्नशिलोच्चयः ॥

अधोधःस्फटिकश्वेतो मध्ये नीलशिलो गिरिः ।
भूतिभिःसर्वतःशुक्लो नीलकण्ठ इवाऽऽबभौ ॥ ९९ ॥

सर्वत्रासौ नीलशिलो हेमरेखान्तरान्तरः । स्फुरद्विद्युल्लतःकृष्णो जीमूतइव राजते ॥
मूर्ध्नि नीलशिलःशैलस्त्वधःकाञ्चनमेखलः । नारायण इवाभाति परिवीत इवाम्बरः ॥
अमेखला सुनीलाभो मध्येमध्ये सितोपलः । सतारकमिव व्योम शुशुभे स महीधरः ॥
लब्ध्वात्मनस्तनुं शुभ्रां दीप्तदिव्यौषधीधरः । वहुद्योतकरो भाति द्वितीय इव चन्द्रमाः

अधित्यकासु संगीतैःकिन्नरीणां सकीचकैः ।
रम्भापत्रपताकाभिःशोभते स सदाऽचलः ॥ १०१ ॥ √

हरितोपलवैदूर्यपद्मरागशिताश्मनाम् । रुग्रश्मिमण्डलैःसोऽग इन्द्रचापैरिवावृतः ॥१०२
सर्वधातुमयैर्हैमैर्नानारत्नैःप्रशोभितः । सोऽग्निज्वालैरिवात्युच्चैःशृङ्गैःसर्वत्र वेष्टितः ॥
तस्यागत्य नितम्बेषु सतृणासु शिलासु च । विद्याधर्यःप्रसेवन्ते स्वपतीन्कामविक्लवाः
निरुद्धान्तर्मरुन्मागा जितक्लेशा विरागिणः । ध्यायन्त्यहर्निशं ब्रह्म रम्यसानुगुहासु च
साक्षसूत्रकराःसिद्धा अर्धोन्मीलितलोचनाः । आराधयन्ति भूतेशं सुन्दरीषु दरीषु च ॥
मन्दारकुसुमामोदसुरभीकृतदिङ्मुखः । एषनिर्झरिणीवारिझंकारमुखरःसदा ॥ १०७॥

उपत्यकासु खेलद्भिर्वनस्थैःकलभैर्गजैः । कस्तूरीमृगयूथैश्च चारुचित्रमृगैस्तथा ॥१०८
विलसच्चमरीवृन्दैर्विचित्रैःश्वापदैस्तथा । नदत्पारावतैश्चैव चकोरैश्चापि कोकिलैः ॥
राजहंसैर्मयूरैश्च सदा रम्यःस पर्वतः । सेव्यमानःसदादेवैर्गुह्यकैरप्सरोगणैः ॥ ११० ॥

राजोवाच ।

बह्वाश्चर्यमयःशैलःसर्वसिद्धिसमाश्रयः । भगवन्किंयदुच्छ्रायःकियदायामविस्तरः ॥१११

ऋषिरुवाच ।

षट्त्रिंशद्योजनोच्छ्रायो मस्तके दशयोजनः ।
आयामविस्तराभ्यां स मूले षोडशयोजनः ॥ ११२ ॥

हरिचन्दनमन्दारचूतराजिविराजितः । देवदारुद्रुमाकीर्णःसरलार्जुनशोभितः ॥ ११३ ॥
कालागरुलवङ्गैश्च निकुञ्जैश्च लतागृहैः । विराजते गिरिश्रेष्ठःसदा पुष्पफलप्रदः ॥
तं दृष्ट्वा पर्वतं रम्यं तदा दुर्भिक्षपीडितः । भृगुश्चकार तत्रैव वसतिं हृष्टमानसः ॥११५
( तस्मिन्मनोहरे शैले कन्दरेषु वनेषु च )। चिरकालं तपस्तेपे तपःसुनिरतो भृगुः ॥

एवं तिष्ठति राजेन्द्र ! द्विजे स्वाश्रमवासिनि ॥ ११६ ॥
अवतीर्यागतौ शैलाद्दृष्टौ विद्याधरदम्पती ।
समागम्य मुनिं नत्वा स्थितौ तावतिदुःखितौ ॥ ११७ ॥
तथाविधौ च तौ दृष्ट्वा मञ्जुवाक्यं द्विजोऽब्रवीत् ।
वद विद्याधर! प्रीत्या युवां किमतिदुःखितौ ॥ ११८ ॥

श्रुत्वा तस्य मुनेर्वाक्यं प्राह विद्याधरो द्विजम् ।श्रूयतां तापसश्रेष्ठ! ममदुःखस्य कारणम्

सुकृतस्य फलं प्राप्य प्राप्तोऽस्मि त्रिदशालयम् ।
लब्ध्वाऽपि देवतादेहं मुखं व्याघ्रस्य मेऽभवत् ॥ १२० ॥

न जाने कर्मणःकस्य विपाकोऽयमुपस्थितः । इति संस्मृत्य संस्मृत्य न लेभे शर्म मे मनः
अन्यच्च श्रूयतां विप्र येन मे ह्याकुलंमनः । जायेयं मम कल्याणी मधुवाणी सुरूपिणी
नृत्यगीतकलाभिज्ञा सर्व सद्गुणशालिनी । यस्मिन्काले कुमारीयंतदाचाऽमलयानया
विपञ्ची परिवादिन्या तन्त्रीभिःसप्तभिर्भृशम् । वीणावादरसाभिज्ञस्तोषितो नारदो मुनिः

मुग्धभावेऽपि गायन्त्या त्वनया रक्तकण्ठया । विचित्रस्वरनादज्ञो देवराजोऽपि तोषितः
अस्याःकौतुकभिन्नाङ्ग्या वादयन्त्या विपञ्चिकाम् ।
नानावक्रगतिस्निग्धं श्रुत्वा तं पञ्चमध्वनिम् ॥ १२६ ॥
तुतोषोद्भिन्नरोमाञ्चो धुन्वन्मौलिं महेश्वरः । शीलौदार्यगुणग्रामरूपयौवनसंपदा ॥
नानया सदृशी नाके काचिदस्ति नितम्बिनी ।
क्वेयं देवमुखी रामा काहं व्याघ्रमुखःपुमान् ॥ १२८ ॥
इति ब्रह्मन्सदाचिन्त्य दह्यामि हृदि सर्वदा । इति विद्याधरप्रोक्तं श्रुत्वा चेक्ष्वाकुनन्दन
त्रिकालज्ञो भृगुःप्राह प्रहसन्दिव्यलोचनः । शृणु विद्याधरश्रेष्ठ विचित्रं कर्मणां फलम्
प्राप्य प्राज्ञा न मुह्यन्ति मुह्यन्त्यज्ञानचेतसः । मक्षिकापदमात्रं तु यथा हि विषमं विषम्
क्रियात्वविहिताल्पाऽपि विपाके दारुणा तथा ।
उपोष्यैकादशीं माघे तैलाभ्यङ्गःकृतस्त्वया ॥ १३२ ॥
द्वादश्यां प्राग्भवे देहे तेन व्याघ्रमुखो भवान् ।
उपोष्यैकादशीं पुण्यां द्वादश्यां तैलसेवनात् ॥ १३३ ॥
कुरूपं प्राप्तवान्देहं पुराह्येवं पुरूरवाः । दृष्ट्वात्मनःकुकायं स तेन दुःखेन दुःखितः ॥
गिरिराजं समागम्य देवतासरसस्तटे । स्थित्वा च परमप्रीत्या शुचिःस्नातःकुशासने
नवनीलघनश्यामं नलिनायतलोचनम् । शङ्खचक्रगदापद्मधरं पीताम्बरावृतम् ॥ १३६ ॥
कौस्तुभेन विराजन्तं वनमालाधरं हरिम् । चिन्तयन्हृदये राजा निगृहीताखिलेन्द्रियः
मासत्रयं निराहारस्तपस्तेपे सुदारुणम् । अल्पेन तपसा तुष्टःसप्तजन्मकृतार्चनः ॥१३८॥
संस्मरंस्तस्य भूपस्य तदा प्रादुरभूत्स्वयम् । माघस्य शुक्लपक्षे तु द्वादश्यां मकरे रवौ
शङ्खाद्भिरभिषिच्याशु मुदा तं चक्रवर्तिनम् । वासुदेवो ददौ तस्मै स्मारयंस्तैलचेष्टितम्
अतीवसुन्दरं रूपं कमनीयं मनोहरम् । येन तं चकमे देवी उर्वशी देवनायिका॥१४१॥
इत्थं लब्धवरो राजा कृतकृत्यःपुरंगतः । इति कर्मगतिं ज्ञात्वा किं विद्याधर ! खिद्यते॥
भवान्परिजिहीर्षुश्चेद्दानवस्य विरूपताम् । शीघ्रं मद्वचनादेव प्राचीनाघविनाशनम् ॥
माघमासे कुरु स्नानं मणिकूटनदीजले । मुनिसिद्धसुरैर्जुष्टे कथयिष्यामि तद्विधिम्

तवभाग्यवशान्माघो निकटःपञ्चमेऽहनि । पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः
मासमेकं निराहारस्त्रिकालं स्नानमाचर । त्रिकालमर्चयन्विष्णुं त्यक्तभोगो जितेन्द्रियः
माघस्यैकादशीशुक्ला यावद्विद्याधरोत्तम । ततो निर्दग्धपापं त्वां द्वादश्यां पुण्यवासरे
अभिषिच्य शिवैस्तोयैर्मन्त्रपूतैरहं सुर । कामवक्त्रोपमं वक्त्रं करिष्यामि तवानघ ॥
देवतावदनो भूत्वा त्वं विद्याधरसत्तम । अनया वरवर्णिन्या सार्धं क्रीड यथासुखम् ॥
ज्ञातमाघप्रभावस्त्वं माघस्नानं सदा कुरु । यथा मनोरथावाप्तिर्जायते तव सर्वदा ॥
इत्युक्तं भृगुणा तस्मै सर्वज्ञेन महात्मना । विद्याधराय राजेन्द्र पुनर्गाथा उदाहृता ॥
माघस्नानैर्विपन्नाशो माघस्नानैरघक्षयः । सर्वयज्ञाधिको माघःसर्वदानफलप्रदः ॥
माघोगर्जति यज्ञेभ्यो माघो योगाच्च गर्जति । तीव्राच्च तपसो माघो भो विद्याधरगर्जति
पुष्करे च कुरुक्षेत्र ब्रह्मावर्ते पृथूदके । अविमुक्ते प्रयागे च गङ्गासागरसंगमे ॥ १५४ ॥
यत्फलं दशभिर्वर्षैःप्राप्यते नियमैर्नरैः । तत्फलं प्राप्यते माघे त्र्यहस्नानान्न संशयः ॥
स्वर्गलोके चिरंरागो येषां मनसिवर्तते । यत्र क्वापि जलेतैस्तु स्नातव्यं मकरे रवौ ॥

आयुरारोग्यसंपत्तिरूपसौभाग्यतागुणाः ।
येषां मनोरथास्तैस्तु न त्याज्यं माघमज्जनम् ॥ १५७ ॥
ये च बिभ्यति नरकाद्ये दारिद्र्याच्च संचितात् ।
सर्वथा तैःप्रयत्नेन माघे कार्यं निमज्जनम् ॥ १५८ ॥

दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय च । माघस्नानान्न चान्योऽस्ति उपायो राजसत्तम ॥
श्रद्धाहीनानि कर्माणि तथात्यल्पफलानि वै । फलं ददाति संपूर्णं माघस्नानंयथातथा

अकामो वा सकामो वा यत्र क्वाऽपि वहिर्जले ।
इहामुत्र च दुःखानि माघस्नायी न विन्दति ॥ १६१ ॥

पक्षद्वये यथा चन्द्रो वर्धते क्षीयते तथा । पातकं क्षीयते माघे पुण्यराशिश्च वर्धते ॥

यथा च खन्या जायन्ते रत्नानि विविधानि च ।
स्नानात्पुण्यानि जायन्ते नराणां माघतस्तथा ॥ १६३ ॥

आयुर्वित्तं कलत्रादि संपदःप्रभवन्ति च । कामधेनुर्यथा कामं चिन्तामणिस्तु चिन्तितम्

माघस्नानं ददातीह तद्वत्सर्वान्मनोरथान् । कृते तपःपरं ज्ञानं त्रेतायां यजनं तथा ॥
द्वापरे तु कलौ ज्ञानं माघःसर्वयुगेषु च । सर्वेषामेव वर्णानामाश्रमाणां च भूपते ॥
माघस्नानं तु धर्मस्य धाराभिरभिवर्षति ॥ १६६ ॥

वसिष्ठ उवाच ।

इति वाक्यं भृगोःश्रुत्वा तस्मिन्नेवाश्रमे सुरः । सहैव भृगुणा माघे गिरौ निर्झरिणीतटे
यथोक्तविधिना स्नानमकरोद्भार्यया सह । भृगोरनुग्रहात्सोऽथ संप्राप्य मनसेप्सितम् ॥
देवतावदनो भूत्वा मुमुदे मणिपर्वते । आजगाम भृगुर्विन्ध्यं तमनुग्राह्य हर्षितः॥१६६॥

मणिमयगिरिराजे स्नानमात्रेण माघे मदनवदनरूपस्तत्र विद्याधरोऽभूत् ।
क्षपितनियमदेहो विन्ध्यपादावतीर्णो भृगुरपि सहशिष्यैराजगामाथ रेवाम्
अखिलभुवनसारं माघमाहात्म्यमेतद्द्विजवर भृगुणोक्तं भूपविद्याधराय ।
विविधफलविचित्रं यःशृणोतीह नित्यं रुचिरसकलकामान्देववत्प्राप्नुयात्सः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे माघमाहात्म्ये
वसिष्ठदिलीपसंवादे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

## पञ्चविंशत्यधिकशततमोऽध्यायः

### माघस्नानमाहात्म्ये कार्तवीर्यदत्तात्रेयसम्वादवर्णनम्

वसिष्ठ उवाच ।

अधुना माघमाहात्म्यं प्रवक्ष्यामि नृपोत्तम । पृच्छते कार्तवीर्याय दत्तात्रेयेण भाषितम्
दत्तात्रेयं हरिं साक्षाद्वसन्तं सह्यपर्वते । पप्रच्छ तं द्विजं गत्वा राजा माहिष्मतीपतिः

सहस्रार्जुन उवाच ।

भगवन्योगिनांश्रेष्ठ सर्वेधर्माःश्रुता मया । माघस्नानफलं ब्रूहि कृपया मम सुव्रत ॥ ३॥

दत्तात्रेय उवाच ।

श्रूयतां नृपशार्दूल एतत्प्रश्नोत्तरं शुभम् । ब्रह्मणोक्तं पुरा ह्येतन्नारदाय महात्मने ॥ ४ ॥
तत्सर्वं कथयिष्यामि माघस्नानफलं महत् । यथादेशं यथातीर्थं यथाविधि यथाक्रियम्

अस्मिन्वै भारते वर्षे कर्मभूमौ विशेषतः ।

अमाघस्नायिनां नृणां निष्फलं जन्म कीर्तितम् ॥ ६ ॥

असूर्यं गगनं यद्वदचन्द्रमुडुमण्डलम् । तद्वन्नाभाति सत्कर्म माघस्नानं विना नृप ॥७॥
व्रतैर्दानैस्तपोभिश्च न तथा प्रीयते हरिः । माघमज्जनमात्रेण यथा प्रीणाति केशवः ॥
न समं विद्यते किंचित्तेजःसौरेणतेजसा । तद्वत्स्नानेन माघस्य न समाःक्रतुजाःक्रियाः
प्रीतये वासुदेवस्य सर्वपापापनुत्तये । माघस्नानं प्रकुर्वीत स्वर्गलाभाय मानवः ॥१०॥
किं रक्षितेन देहेन सुपुष्टेन वलीयसा । अध्रुवेणाप्यशुचिना माघस्नानं विना भवेत् ॥
अस्थिस्तम्भं स्नायुवद्धं मांसक्षतजलेपनम् । चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः ॥
जराशोकविपद्व्याप्तं रोगमन्दिरमातुरम् । रजस्वलमनित्यं च सर्वदोषसमाश्रयम् ॥
परोपतापितापार्तं परद्रोहि परंविषम् । लोलुपं पिशुनं क्रूरं कृतघ्नं क्षणिकं तथा ॥
दुष्पूरं दुर्धरं दुष्टं दोषत्रयसमन्वितम् । अशुचि स्रावि सच्छिद्रं तापत्रयविमोहितम् ॥
निसर्गतोऽधर्मरतं तृष्णाशतसमाकुलम् । कामक्रोधमहालोभनरकद्वारसंस्थितम् ॥१६
क्रिमिविड्भस्म भवति परिणामे शुनांहविः । ईदृक्छरीरं व्यर्थं हि माघस्नान विवर्जितम्
बुद्बुदा इव तोयेषु पूतिका इव जन्तुषु । जायन्ते मरणायैवमाघस्नानविवर्जिताः ॥
अवैष्णवो हतो विप्रो हतं श्राद्धमयोगि च । अब्रह्मण्यं हतं क्षेत्रमनाचारं हतं कुलम् ॥
सदम्भश्च हतो धर्मःक्रोधेनैव हतं तपः । अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥२०॥
गुर्वभक्ता हता नारी ब्रह्मचारी तया हतः । अदीप्तेऽग्नौ हतो होमो हता भुक्तिरसाक्षिका

उपजीव्या हता कन्या स्वार्थे पाकक्रियाहता ।

शूद्रभिक्षो हतो यागःकृपणस्य हतं धनम् ॥२२॥

अनभ्यासा हता विद्या हतो राजा विरोधकृत् । जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम्
असत्या च हता वाणी तथा पैशुन्यवादिनी । संदिग्धश्च हतो मन्त्रो व्यग्रचित्तो हतो जपः

हतमश्रोत्रिये दानं हतो लोकश्च नास्तिकः । अश्रद्धया हतं सर्वं कृतं यत्पारलौकिकम्
इहलोको हतो नॄणां दरिद्राणां यथा नृप ।
मनुष्याणां तथा जन्म माघस्नानं विना हतम् ॥ २६ ॥
मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ । कथं पापैःप्रमुच्येत कथं स त्रिदिवं व्रजेत्
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः । माघस्नायी विपापःस्यात्तत्संसर्गी च पञ्चमः
माघमासे रटन्त्यापःकिंचिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे॥
उपपापानि सर्वाणि पातकानि महान्त्यपि ।
भस्मीभवन्ति सर्वाणि माघस्नायिनि मानवे ॥ ३० ॥
कम्पन्ते सर्वपापानि माघस्नानसमागमे ।
नाशकालोऽयमस्माकं यदि स्नास्यति वारिणि ॥ ३१ ॥
एवं क्रोशन्ति पापानि दृष्ट्वा स्नानोद्यतं नरम् । पावका इव दीप्यन्ते माघस्नानैर्नरोत्तमाः
विमुक्ताःसर्वपापेभ्यो मेघेभ्य इव चन्द्रमाः । आर्द्रंशुष्कं लघुस्थूलं वाङ्मनःकर्मभिःकृतम्
माघस्नानं दहेत्पापं पावकःसमिधो यथा । प्रामादिकं च यत्पापं ज्ञानाज्ञानकृतं च यत्
स्नानमात्रेण तन्नश्येन्मकरस्थे दिवाकरे ।
निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धताम् ॥ ३५ ॥
संदेहो नाऽत्र कर्तव्यो माघस्नाने नराधिप ! ।
सर्वेऽधिकारिणो माघे विष्णुभक्तौ यथा नृप ! ॥ ३६ ॥
सर्वेषां स्वर्गदो माघःसर्वेषां पापनाशनः । एष एव परो मन्त्रो ह्येतदेव परंतपः ॥३७॥
प्रायश्चित्तं परं चैतन्माघस्नानमनुत्तमम् । नृणां जन्मान्तराभ्यासान्माघस्नाने मतिर्भवेत्
अध्यात्मज्ञानकौशल्यं जन्माभ्यासाद्यथा नृप । संसारकर्दमालेपप्रक्षालनविशारदम्॥
पावनं पावनानां च माघस्नानं परं नृप । स्नान्ति माघे न ये राजन्सर्वकामफलप्रदे॥
कथं ते भुञ्जते भोगांश्चन्द्रसूर्यग्रहोपमान् । शृणु राजन्महाश्चर्यं माघस्नानप्रभावजम्॥
कुब्जिका नाम कल्याणी ब्राह्मणी भृगुवंशजा ।
बालवैधव्यदुःखार्ता तपस्तेपे सुदुस्तरम् ॥ ४२ ॥

विन्ध्यपादे महाक्षेत्रे रेवाकपिलसंगमे। तत्र सा व्रतिनी भूत्वा नारायणपरायणा॥
सदाचारवती नित्यं नित्यं सङ्गविवर्जिता। जितेन्द्रिया जितक्रोधा सत्यवागल्पभाषिणी
सुशीला दानशीला च देहशोषणशालिनी। पितृदेवद्विजेभ्यश्च दत्त्वा हुत्वा तथानले॥

षष्ठे काले च सा भुङ्क्ते ह्युञ्छवृत्तिःसदा नृप।
कृच्छ्रातिकृच्छ्रपाराकतप्तकृच्छ्रादिभिर्व्रतैः॥ ४६॥

पुण्यान्नयति सा मासान्नर्मदायाश्च रोधसि। एवं तया तपस्विन्या वल्कलिन्या सुशीलया
सुमहासत्त्वशालिन्या धृतिसंतोषयुक्तया। षष्टिर्माघास्तया स्नाता रेवाकपिलसंगमे॥
ततःसा तपसा क्षीणा तस्मिंस्तीर्थे मृता नृप। माघस्नानजपुण्येन तेन सा वैष्णवेपुरे
उवास प्रमुदायुक्ता चतुर्युगसहस्रकम्। सुन्दोपसुन्दनाशाय पश्चात्पद्मभवात्पुनः॥
तिलोत्तमेति नाम्ना सा ब्रह्मलोकेऽवतारिता। तेन पुण्यस्य शेषेण रूपस्यैकायनं ययौ
अयोनिजाऽवलारत्नं देवानामपि मोहिनी। लावण्यह्लादिनी तन्वी साऽभूदप्सरसां वरा
निपुणस्यविधेःस्रष्टुर्नूनमाश्चर्यकारिणी। तामुत्पाद्य विधाता वै तुष्टोऽनुज्ञां तदा ददौ

एणशावाक्षि! गच्छ त्वं दैत्यनाशाय सत्वरम्।
ततःसा ब्रह्मणोलोकाद्वीणामादाय भामिनी॥ ५४॥

गता पुष्करमार्गेण यत्र तौ देववैरिणौ। तत्र स्नात्वा तु रेवायाःपवित्रे निर्मले जले॥
परिधायाम्बरं रक्तं बन्धूककुसुमप्रभम्। रणद्वलयिनी चारुशिञ्जन्मेखलनूपुरा॥ ५६॥

लोलमुक्तावली कण्ठी चलत्कुण्डलशोभना।
माधवीकुसुमापीडा कङ्केलीविटपे स्थिता॥ ५७॥
गायन्ती सुस्वरं साऽपि पीडयन्ती तु वल्लकीम्।
स्वरषट्कं मूर्च्छयन्ती सुस्निग्धं कोमलं कलम्॥५८॥

इत्थं तिलोत्तमा बाला तिष्ठन्त्यशोककानने। दृष्टा दैत्यभटैरिन्दोःकलेव सुखदा हृदि॥
तां दृष्ट्वा विस्मितैराजन्सानन्दैःसैनिकैर्भृशम्। त्वरमाणैरदृष्टैव गत्वा सुन्दोपसुन्दयोः
कथिता संभ्रमेणैव वर्णयित्वा पुनःपुनः। हे दैत्यौ न विजानीमो देवी वा दानवी नुकिम्

नागाङ्गनाऽथ वा यक्षी स्त्रीरत्नं सर्वथा तु सा।

युवां रत्नभुजौ लोके रत्नभूता हि साऽबला ॥ ६२ ॥
वर्तते नातिदूरेऽग्रे ह्यशोके शोकहारिणी ।
गत्वा तां पश्यतं शीघ्रं मन्मथस्याऽपि मोहिनीम् ॥ ६३ ॥
इति सेनापतीनां तौ श्रुत्वा वाचं मनोहराम् ।
चषकं सीधुन(शीघ्रत)स्त्यक्त्वा विहाय जलसेचनम् ॥ ६४ ॥
उत्तमस्त्रीसहस्राणि त्यक्त्वा तस्माज्जलाशयात् ।
शतभारायसीं क्रूरां कालदण्डोपमां गदाम् ॥ ६५ ॥
भिन्नाभिन्नां गृहीत्वा तु जवेनाभिप्लुतं गतौ ।
यत्र शृङ्गारसज्जा सा हन्तुं चण्डीव संस्थिता ॥ ६६ ॥
राजन्संधुक्षयन्तीव दैत्ययोर्मन्मथानलम् । स्थित्वा तस्याःपुरोजाल्मौ तद्रूपेण विमोहितौ
विशेषान्मधुनामत्तावूचतुस्तौ परस्परम् । भ्रातर्विरम भार्येयं ममास्तु वरवर्णिनी॥६८
त्वमेवार्य त्यजैतां मे भार्यां तु मदिरेक्षणाम् । इत्याग्रहेण संरब्धौ मातङ्गाविव सोन्मदौ
अन्योन्यं कालनिर्दिष्टौ गदया जघ्नतुस्तदा । परस्परप्रहारेण गतासू पतितौ भुवि॥
तौ मृतौ सैनिकैर्दृष्ट्वा कृतःकोलाहलो महान् ।
कालरात्रिसमा केयं हा किमेतदुपस्थितम् ॥ ७१ ॥
एवं वदत्सु सैन्येषु दैत्यौ सुन्दोपसुन्दकौ । पातयित्वा गिरेःशृङ्गे ह्लादिनीव तिलोत्तमा
प्रस्थिता गगनं शीघ्रं द्योतयन्ती दिशो दश । देवकार्यं ततःकृत्वा आगता ब्रह्मणःपुरः॥
ततस्तुष्टेन देवेन विधिना सानुमोदिता । स्थानं सूर्यरथे दत्तं तव चन्द्रानने मया॥
भुङ्क्ष्व भोगाननेकांस्त्वं यावत्सूर्योऽम्बरे स्थितः ।
इत्थं सा ब्राह्मणी राजन्भूत्वा चाप्सरसाम्वरा ॥ ७५ ॥
भुङ्क्तेऽद्याऽपि रवेर्लोके माघस्नानफलं महत् । तस्मात्प्रयत्नतो राजञ्छ्रद्दधानैःसदा नरैः
स्नातव्यं मकरादित्ये वाञ्छद्भिःपरमांगतिम् । नाऽनवाप्तोऽत्र तस्यास्ति पुरुषार्थोहिकश्चन
नाऽक्षीणं पातकं किंचिन्माघे मज्जति यो नरः ।
तुलयन्ति न ते नाऽत्र यज्ञाःसर्वे सदक्षिणाः ॥ ७८ ॥

माघस्नानेन राजेन्द्र तीर्थेचैव विशेषतः। न चान्यत्स्वर्गदं कर्म न चान्यत्पापनाशनम्
न चान्यन्मोक्षदं यस्मान्माघस्नानसमं भुवि ॥ ८० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे माघस्नानप्रशंसायांसुन्दोपसुन्ददैत्यवधो नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

---

# षड्विंशत्यधिकशततमोऽध्यायः

## माघस्नानविधिवर्णनम्

कार्तवीर्य उवाच ।

हेतुना केन विप्रर्षे माघस्नाने महाद्भुतः। प्रभावो वर्ण्यते नूनं तन्मे कथय सुव्रत ॥१॥
गतपापो यदेकेन द्वितीयेन दिवंगतः। वैश्योऽसौ माघपुण्येन ब्रूहि मे तत्कुतूहलम् ॥२

दत्तात्रेय उवाच ।

निसर्गात्सलिलं मेध्यं निर्मलं शुचि पाण्डुरम्। मलहं पुरुषव्याघ्र द्रावकं दाहनाशनम्
तारकं सर्वभूतानां पोषणं जीवनं च यत्। आपो नारायणोदेवःसर्ववेदेषु पठ्यते ॥४
ग्रहाणां च यथा सूर्यो नक्षत्राणां यथा शशी। मासानां च तथा माघःश्रेष्ठःसर्वेषु कर्मसु
मकरस्थेरवौ माघे प्रातःकाले तथाऽमले। गोष्पदेऽपि जलेस्नानं स्वर्गदं पापिनामपि
योगोऽयं दुर्लभो राजंस्त्रैलोक्ये सचराचरे।
अस्मिन्योगे त्वशक्तोऽपिस्नायाद्यदि दिनत्रयम् ॥ ७ ॥
दद्यात्किंचिदशक्तोऽपि दारिद्र्याभाववाञ्छया।
त्रिस्नानेनापि माघस्य धनिनो दीर्घजीविनः ॥ ८ ॥
पञ्च वा सप्तवाऽहानि चन्द्रवद्वर्धते फलम्। संप्राप्ते मकरादित्ये पुण्येपुण्यप्रदोहणाम्

सत्कार्यास्तिथयः सर्वाः स्नानदानादिकर्मसु । कर्तारं यापयन्तीह ह्यक्षयं शाश्वतं पदम् ॥
तस्मान्माघे बहिःस्नायादात्मनो हितकाम्यया ।
अथातः संप्रवक्ष्यामि माघस्नानविधिं परम् ॥ ११ ॥
कर्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः । फलातिशयहेतोर्वै किंचिद्भोज्यं त्यजेद्बुधः
भूमौ शयीत होतव्यमाज्यं तिलविमिश्रितम् । त्रिकालं चार्चयेद्विष्णुं वासुदेवं सनातनम्
दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् । इन्धनं कम्बलं वस्त्रमुपानत्कुङ्कुमं घृतम्
तैलं कार्पासकोष्ठं च तूलीं तूलवटीं पटीम् । अन्नं चैव यथाशक्ति देयं माघे नराधिप ॥
सुवर्णं रत्तिकामात्रं दद्याद्वेदविदे तथा । तद्दानमक्षयं राजन्समुद्र इव सर्वदा ॥ १६ ॥
परस्याग्निं न सेवेत त्यजेच्चैव प्रतिग्रहम् । माघान्ते भोजयेद्विप्रान्यथाशक्ति नराधिप
देया च दक्षिणा तेभ्य आत्मनः श्रेयइच्छता ।
एकादशीविधानेन माघस्योद्यापनं तथा ॥ १८ ॥
कर्तव्यं श्रद्दधानेन ह्यक्षय्यस्वर्गवाञ्छया । अनन्तपुण्यावाप्त्यर्थं विष्णुसंप्रीतिहेतवे ॥
मकरस्थे रवौ माघे गोविन्दाच्युतमाधव । स्नानेनानेन भो देव यथोक्तफलदो भव ॥
इति मन्त्रं समुच्चार्य स्नायान्मौनी समाहितः । वासुदेवं हरिं कृष्णं माधवं च स्मरेत्पुनः
गृहेऽपि सजलं कुम्भं वायुना निशि पीडितम् । तत्स्नानं तीर्थसदृशं सर्वकामफलप्रदम्
तत्र व्रतेन दातव्यं सान्नं चोपस्करान्वितम् । तत्स्नानस्य प्रभावेण नरो न निरयं व्रजेत्
तप्तेनवारिणा स्नानं यद्गृहे क्रियते नरैः । षडब्दफलदं तद्धि मकरस्थे दिवाकरे ॥ २४
बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् ।
तडागे द्विगुणं राजन्नद्यां चैव चतुर्गुणम् ॥ २५ ॥
शतधा देवखातेषु शतधा तु महानदे । शतं चतुर्गुणं राजन्महानद्योश्च संगमे ॥ २६ ॥
सहस्रगुणितं सर्वं तत्फलं मकरे रवौ । गङ्गायां स्नानमात्रेण लभते मानवो नृप ॥ २७
गङ्गायां येऽवगाहन्ते माघमासे नृपोत्तम । चतुर्युगसहस्रं तु न पतन्ति सुरालयात् ॥
दिने दिने सहस्रं तु सुवर्णानां विशांपते । तेन दत्तं तु गङ्गायां यो माघे स्नाति मानवः
शतेनगुणितं माघे सहस्रं राजसत्तम । निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसंगमे ॥ ३० ॥

पापौघभूरिभारस्य दाहार्थं च प्रजापतिः। प्रयागं विदधे भूप प्रजानां च हिते स्थितः
शृणु स्थानमिदं सम्यक्सितासितजलं किल। पापरूपपशूनां च ब्रह्मणा विहितं पुरा
सितासितजले मज्जेदपि पापशतान्वितः। मकरस्थे रवौ माघे नैव गर्भेषु मज्जति॥
सूनारतोऽपि यो मर्त्यःप्रयागे स्नानमाचरेत्। माघेमासि नरव्याघ्र स याति परमंपदम्

सितासिता तु या धारा सरस्वत्याविगर्भिता।
तन्मार्गं विष्णुलोकस्य सृष्टिकर्ता ससर्ज वै॥ ३५॥

दुस्तरा वैष्णवी माया देवैरपि सुदुर्जया। प्रयागे दह्यते सा तु माघेमासि नराधिप॥
तेजोमयेषु लोकेषु भुक्त्वाभोगाननेकशः। पश्चाच्चक्रिणि लीयन्तेप्रयागे माघमज्जनात्

उपस्पृशति यो माघे मकरार्के सितासिते।
न तत्पुण्यं च सङ्ख्यातुं चित्रगुप्तोऽपि वेत्यलम्॥ ३८॥
सन्निमज्जति यो माघे मकरस्थसितासिते।
तस्य पुण्यस्य माहात्म्यं वक्तुं ब्रह्माऽपि न क्षमः॥ ३९॥

संवत्सरशतं साग्रं निराहारस्य यत्फलम्। प्रयागे माघमासे तु त्र्यहस्नानस्य तत्फलम्
स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे। यत्फलं लभते माघे वेण्याःस्नानाद्दिनेद्दिने॥

राजसूयसहस्रस्य राजन्नविकलं फलम्।
सितासिते तु माघे च स्नानानां भवति ध्रुवम्॥ ४२॥
पृथिव्यां यानि तीर्थानि पुर्यःसप्त च याःपुनः।
वेण्यां स्नातुं समायान्ति माघे मासि नृपोत्तम॥ ४३॥

सर्वतीर्थानिकृष्णानि पापिनांसङ्गदोषतः। भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात्
आकल्पसंचितं पापं जन्मभिर्यन्नरैर्नृप। तद्भवेद्भस्मसान्माघे स्नातानां च सितासिते॥

वाङ्मनःकायजं पापं नरस्य विलयं व्रजेत्।
प्रयागे माघमासे तु त्र्यहस्नातस्य निश्चितम्॥ ४६॥
प्रयागे माघमासे यस्त्र्यहं स्नाति च मानवः।
पापं त्यक्त्वा दिवं याति जीर्णात्वचमिवोरगः॥ ४७॥

कुरुक्षेत्रसमा गङ्गा यत्र कुत्रावगाहिता। तस्माद्दशगुणा पुण्या यत्र विन्ध्येन सङ्गता
तस्माच्छतगुणा गङ्गा काश्यामुत्तरवाहिनीं। काश्याःशतगुणा प्रोक्ता गङ्गायामुनसंगमे
सा सहस्रगुणा तासां भवेत्पश्चिमवाहिनी। या राजन्दर्शनादेव ब्रह्महत्यापहारिणी॥
या पश्चाद्वाहिनीगङ्गा कालिन्द्या सह संगता। हन्ति कोटिकृतं पापं सा माघे नृप दुर्लभा

यत्कथ्यतेऽमृतं राजन्सा वेणी भुवि कीर्तिता।
तस्यां माघे मुहूर्तं तु देवानामपि दुर्लभम्॥ ५२॥

ब्रह्मा विष्णुर्महादेवो रुद्रादित्यमरुद्गणाः। गन्धर्वा लोकपालाश्च यक्षकिन्नरपन्नगाः॥

अणिमादिगुणैः सिद्धा येचाऽन्ये तत्त्ववादिनः।
ब्रह्माणी पार्वती लक्ष्मीः शची मेनाऽदितिर्दितिः॥ ५४॥

सर्वास्ता देवपत्न्यश्च तथा नागाङ्गना नृप!। घृताची मेनका रम्भा उर्वशी च तिलोत्तमा

गणा ह्यप्सरसां सर्वे पितॄणां च गणास्तथा।
स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप!॥ ५६॥

कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः। प्रयागे माघमासे तु त्र्यहस्नानस्य यत्फलम्
नाश्वमेधसहस्रेण तत्फलं लभते भुवि। त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी॥

राक्षसाय ददौ भूप तेन मुक्तःस पापकृत्॥ ५८॥

कार्तवीर्य उवाच।

भगवन्राक्षसःकोऽसौ सा का काञ्चनमालिनी।
कथं दत्तवती धर्मं कथं वा तस्य सद्गतिः॥ ५९॥

एतत्कथय योगीन्द्र! अत्रिसन्तानभास्कर!। यदि त्वं मन्यसे श्राव्यं परं कौतूहलं हि मे

दत्तात्रेय उवाच।

शृणु राजन्विचित्रं त्वमितिहासं पुरातनम्। यस्य स्मरणमात्रेण वाजपेयफलं लभेत्
अप्सरारूपसंपन्ना नाम्ना काञ्चनमालिनी। प्रयागे माघमासे सा स्नात्वा याति हरालयम्
निकुञ्जे गिरिराजस्य तिष्ठता गिरिरूपिणा। दृष्टा गगनमारूढा तेन वृद्धेन रक्षसा॥
तेजस्विनी सुहेमाभा सुश्रोणी दीर्घलोचना। चन्द्रानना सुकेशी च पीनोन्नतपयोधरा

तां दृष्ट्वा रूपसंपन्नामुवाच राक्षसस्तदा । का त्वं कमलपत्राक्षि कुत आगम्यते त्वया
आर्द्रं च वसनं कस्मात्सार्द्रा ते कबरी कुतः । कुतआगम्यते भीरु कुतस्ते खेचरीगतिः
केन पुण्येन वा भद्रे तव तेजोमयं वपुः । अतीवरूपसम्पन्नं संभूतं च मनोहरम् ॥६७॥
त्वद्वस्त्रबिन्दुपातेन मम मूर्ध्नि सुलोचने । क्षणेन ह्यगमच्छान्ति क्रूरं मे मानसं सदा ॥

नीरस्य महिमा कोऽयमेतद्व्याख्यातुमर्हसि ।

त्वं मे शीलवती भासि नाकृतिर्निर्गुणा भवेत् ॥ ६६ ॥

अप्सरा उवाच ।

श्रूयतामप्सराश्चाहं भो रक्षः कामरूपिणी । प्रयागतश्चागताऽहं नाम्ना काञ्चनमालिनी
आर्द्रःपरिकरो मेऽतः सुस्नाताहं सितासिते । गन्तव्यं तु मया रक्षः कैलासे तु नगोत्तमे
तत्राऽऽस्ते पार्वतीनाथः सुरासुरसुपूजितः । वेणीवारिप्रभावेण रक्षस्ते क्रूरता गता ॥
जाताऽहं येन पुण्येन गन्धर्वस्य सुमेधसः। कन्यका दिव्यरूपा तु तत्सर्वं कथयामि ते
कलिङ्गाधिपतेराज्ञस्त्वहमासं च वेश्यका । रूपलावण्यसम्पन्ना सौभाग्यमदगर्विता ॥

अन्यासां युवतीनां च तत्पुरेऽहं शिरोमणिः ।

तज्जन्मनि मया रक्षो भुक्त्वा भोगान्यथेच्छया ॥ ७५ ॥

मोहितं तत्पुरं सर्वं मया यौवनसंपदा । रत्नानि च विचित्राणि भूषणानि धनानि च
वासांसि चित्ररूपाणि कर्पूरागुरुचन्दनम् । एतच्चोपार्जितं सर्वं मया मोहनरूपया ॥
नाहं जानामि हेम्नोऽन्तं स्वनिवासे निशाचर। संसेवन्ते युवानो मे चरणौ कामपीडिताः

मया ते वञ्चिताः सर्वे सर्वस्वेन तु मायया ।

अन्योन्यस्पर्धाभावेन मृताः केचित्तु कामिनः ॥ ७६ ॥

इत्थं तन्नगरे रम्ये सकले मे गतिस्तदा । प्राप्ते तु वार्द्धके काले शुशोच हृदयं मम ॥

न दत्तं न हुतं जप्तं न व्रतं चरितं मया ॥ ८० ॥

नाराधितो मया देवश्चतुर्वर्गफलप्रदः । न मया पूजिता देवी दुर्गा दुर्गतिनाशिनी ॥
सर्वपापहरो विष्णुर्न स्मृतो भोगलुब्धया । न च संतर्पिता विप्रा न कृतं प्राणिनांहितम्

अणुमात्रमिदं पुण्यं न कृतं च प्रमादतः ॥ ८२ ॥

पातकं तु कृतं भद्र तेन मे दह्यते मनः । वहुधैवं विलप्याऽहं ब्राह्मणं शरणंगता ॥८३॥
ब्रह्मण्यं वेदविद्वांसं तस्य राज्ञःपुरोहितम् । स हि पृष्टो मयारक्षः कथं मे निष्कृतिर्भवेत्
पापस्याऽस्य द्विजश्रेष्ठ कथं यास्यामि सद्गतिम् ।
स्वेनैव कर्मणा तप्तां वराकीं दीनमानसाम् ॥ ८५ ॥
पापपङ्कनिमग्नां त्वं मामुद्धर कचग्रहैः । मयि कारुण्यजं वारि वर्षहर्षद्दृशा द्विज ! ॥
सज्जने साधवः सर्वे साधुः साधुरसज्जने । इत्यसौ मद्वचः श्रुत्वा चकाराऽनुग्रहं मयि
ऊचे प्रीतिकरं वाक्यं सर्वधर्ममयं द्विजः ॥ ८७ ॥

द्विज उवाच ।

निषिद्धाचरणं जाने सर्वन्तेऽहं वरानने । कुरु मे सत्वरं वाक्यं याहि क्षेत्रं प्रजापतेः ॥
तत्र गत्वा कुरु स्नानं तेन पापक्षयस्तव । सर्वं मनोगतं भद्रे त्वदीयं शोचितं मया ॥
नाहमन्यत्प्रपश्यामि यत्ते पापप्रणाशनम् । प्रायश्चित्तं परं तीर्थे स्नानंचऋषिभिःस्मृतम्
किन्तु तीर्थे त्यजेद्भीरु मनसाऽप्यशुभं कृतम् ।
प्रयागस्नानशुद्धा त्वं स्वर्गं यास्यसि निश्चितम् ॥ ९१ ॥
प्रयागस्नानमात्रेण नृणां स्वर्गो न संशयः । अन्यदेशकृतं पापं तत्क्षणादेव भामिनि !
प्रयागे विलयं याति पापं तीर्थकृतं विना । शृणु भीरु पुरा शक्रो गौतमस्य मुनेर्वधूम्
दृष्ट्वा कामवशं प्राप्तस्तां गतो गुप्तकामुकः । उग्रेण तेन पापेन तदैव जनितं फलम् ॥
ऋषिस्त्रीगन्तुरिन्द्रस्य तस्यांश्च पुरतस्तदा । कुत्सितं गर्हितं जातमिति लज्जाकरं वपुः
तद्भर्त्तुः शापमाहात्म्यात्सहस्रभगचिह्नितम् । अधोमुखस्ततो भूत्वा देवराजो विनिर्गतः
निनिन्द स्वकृतं कर्म सोऽभिभूतः सलज्जितः ।
मेरोःशिरसि तोयाढ्ये शतयोजनविस्तृते ॥ ९७ ॥
तत्र गत्वा प्रविष्टस्तु हेमाम्भोरुहकोरके । तत्रस्थो गर्हयन्नित्यमात्मानं मन्मथं तथा ॥
धिक्तां कामात्मतां लोके सद्यः पातकदायिनीम् ।
यया हि नरकं याति सर्वलोकविगर्हितः ॥ ९९ ॥
आयुःकीर्तियशोधर्मधैर्यध्वंसकरी तथा । धिङ्मन्मथं दुराचारमापदां नियतं पदम् ॥

देहस्थं दुर्दमं शत्रुमसंतुष्टं सदावशम्। इत्थं वादिनि प्रच्छन्ने वासवे पद्मसद्मनि॥
आखण्डलं विना भीरु देवलोको न शोभते। ततो देवाःसगन्धर्वा लोकपालाःसकिन्नराः
शच्या सह समागम्य पप्रच्छुस्ते बृहस्पतिम्। भगवन्वलभिद्देवं नैव जानीमहे वयम्
क्व तिष्ठति गतः कुत्र कुत्र वा मृगयामहे। न नाकः शोभते तेन विना देवगणैःसह॥

सुपुत्रेण विना यद्वत्कुलं श्रीमद्गुणान्वितम्।
उपायश्चिन्त्यतां सद्यः स्वर्लोको येन शोभते॥ १०५॥

सनाथः सुश्रियायुक्तो न विलम्बोऽत्र युज्यते। इतितेषां वचःश्रुत्वा गुरुर्वचनमब्रवीत्

जानेऽहं स्वापराधेन लज्जया यत्र तिष्ठति।
रभसा लब्धकार्यस्य भुङ्क्ते स मघवा फलम्॥ १०७॥

नृणां नीतिपरित्यागाद्विपाकाः स्युर्भयङ्कराः। अहो राज्यमदैर्मत्तः कृत्याकृत्यमचिन्तयन्
कृतवान्निन्द्यमानं हि दृष्टादृष्टक्षयङ्करम्। कुर्वन्ति बालिशा यत्र दैवोपहतबुद्धयः॥

अपराधाद्यथा जन्म स्यादिहामुत्र निष्फलम्।
अधुना तत्र गच्छामो यत्र शक्रः स तिष्ठति॥ ११०॥

इत्युक्त्वा निर्गताः सर्वे बृहस्पतिपुरोगमाः। दृष्ट्वा सरसि विस्तीर्णे स्वर्णपङ्कजकाननम्
तुष्टुवुर्देवराजं ते प्रबोधो येन जायते। ततो गुरोःप्रबोधेन निर्गतः पद्मकुड्मलात्॥
दीनाननो विरूपस्तु व्रीडाकुञ्चितलोचनः। जग्राह चरणाविन्द्रो गुरोस्तस्याग्रजन्मनः

त्राहि मां निष्कृतिं ब्रूहि पापस्याऽस्य बृहस्पते!
देवराजवचः श्रुत्वा जगौ विप्रो बृहस्पतिः॥ ११४॥

शृणु देवेन्द्र वक्ष्येऽहमुपायं पापनाशनम्। प्रयागस्नानमात्रेण तत्क्षणादेव पातकात्
मुच्यसे देवराज त्वं तत्र यामः सहैव ते। अथ पुरोधसा सार्धमागत्य बलमर्दनः॥
सस्नौ सितासिते तीर्थे सद्यो मुक्तो ह्यघैस्ततः। अथ देवगुरुस्तस्मै प्रसन्नस्तु वरं ददौ
प्रयागस्नानमात्रेण क्षीणं पापं तवानघ!। क्षीणपापस्य ते शक्र मत्प्रसादेन सत्वरम्
सहस्रमेतद्योनीनां सहस्रं स्याद्दृशां तव। तदैव द्विजवाक्येन शुशुभे च शचीपतिः॥
लोचनानां सहस्रेण पङ्कजैरिव मानसम्। अथ वृन्दारकैः सर्वैर्ऋषिमिश्चाभिपूजितः

गन्धर्वैः स्तूयमानस्तु गतः शक्रोऽमरावतीम् ।
इत्थं सद्यो विपापोऽभूत्प्रयागे पाकशासनः ॥ १२१ ॥
याहि त्वमपि कल्याणि प्रयागं देवसेवितम् । सद्यः पापविनाशाय तथा स्वर्गतये द्रुढम्
इति तस्य वचः श्रुत्वा सेतिहासं समङ्गलम् । तदैव संभ्रमापन्ना नत्वा पादौद्विजस्यतु
त्यक्त्वा बन्धुजनं सर्वं दासदासीगृहं तथा । सकलान्विषयान्त्रक्षो विषग्रासानिवस्फुटम्
वपुश्च क्षणविध्वंसि पश्यन्ती निर्गता ह्यहम् । नरकार्णवसंपातदारुणान्तरवह्निना ॥
हृदये कुणपव्याघ्रतदातप्यमानया । मया गत्वा कृतं स्नानं माघे मासि सितासिते
तस्य स्नानस्य माहात्म्यं शृणु वृद्धनिशाचर ! ।
त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः ॥ १२७ ॥
शेषैर्मे यदभूत्पुण्यं तेन देवत्वमागता । रममाणा तु कैलासे गिरिजायाःप्रियासखी ॥
जातिस्मरा तथा जाता प्रयागस्य प्रभावतः ।
स्मृत्वा प्रयागमाहात्म्यं माघे माघे व्रजाम्यहम् ॥ १२६ ॥
इति राक्षस यत्पृष्टं त्वया विस्मितचेतसा । तन्मया कथितं सर्वं चरित्रं प्रीतये तव
मत्प्रीतये चरित्रं स्वं त्वं ब्रूहि मम राक्षस! । कर्मणा केन जातोऽसि विरूपोऽतिभयङ्करः
श्मश्रुलो दीर्घदंष्ट्रश्च क्रव्यादो गिरिगह्वरे ॥ १३२ ॥

राक्षस उवाच ।

इष्टं ददाति गृह्णाति गुह्यं वदति पृच्छति ।
प्रीत्या हि सज्जनो भद्रे तच्च सर्वं त्वयि स्थितम् ॥ १३३ ॥
त्वया संभावितो नूनं मन्येऽहं वामलोचने ।
भाविनी निष्कृतिः सद्यस्त्वयाऽस्य क्रूरकर्मणः ॥ १३४ ॥
अतो वक्ष्यामि ते भद्रे दुष्कृतं यत्स्वयं कृतम् । निवेद्य सज्जने दुःखं ततः सर्वसुखी भवेत्
शृणु सुश्रोण्यहं काश्यां बह्वृचो वेदपारगः । जातः पुरा द्विजः श्रेष्ठः कुले महतिनिर्मले
राज्ञां दुष्कृतिनां भीरु शूद्राणां च तथा विशाम् ।
वाराणस्यां कृतो घोरो मया दुष्टप्रतिग्रहः ॥ १३७ ॥

बहुधा बहुधा वारं निषिद्धः कुत्सितो बहु। चाण्डालस्यापि न त्यक्तो मया दुष्टप्रतिग्रहः
अन्यच्च पातकं तत्र ममाभून्मूढचेतसः। तन्नास्ति दुष्कृतं कर्म मया यत्र न यत्कृतम्
अन्यच्च श्रूयतां दोषः क्षेत्रस्य वरवर्णिनि। अविमुक्तेऽणुमात्रं यत्तदघं मेरुतां व्रजेत्॥
न धर्मस्तु मया कश्चित्संचितस्तत्र जन्मनि॥ १४१॥
ततो बहुतिथे काले मृतस्तत्रैव शोभने। अविमुक्तप्रभावेण नचाऽहं नरकं गतः॥१४२
अविमुक्ते मृतः कश्चिन्नरकं नैति किल्विषी। अविमुक्ते कृतं किंचित्पापं वज्रीभवेद्दृढम्
वज्रलेपेन पापेन तेन मे जन्म राक्षसम्। रौद्रं क्रूरतरं पापं संभूतं हिमपर्वते॥१४४॥
द्विर्जातो गृध्रयोनौ प्राक्त्रिर्व्याघ्रो द्विः सरीसृपः।
एकवारमुलूकस्तु विड्वराहस्ततः परम्॥ १४५॥
इदं तु दशमं जन्म राक्षसं मम भामिनि!। अतीतानि सहस्राणि वर्षाणि मम जन्मनः
नास्ति मे निष्कृतिर्भद्रे एतस्माद्दुःखसागरात्।
अत्र त्रियोजनं सुभ्रूर्निर्जन्तु हि मया कृतम्॥ १४७॥
अनागसां च भूतानां बहूनां च कृतःक्षयः। कर्मणा तेन मे सुभ्रूर्दह्यते सततं मनः॥
त्वद्दर्शनसुधासिक्तं गतं शैत्यं मनो मम। तीर्थं फलति कालेन सद्यः साधुसमागमः
अतः सत्संगतिं सुभ्रूः प्रशंसन्ति मनीषिणः। एतत्ते कथितं सर्वं स्वदुःखं हृद्गतं मया
विरलः सज्जनः सुभ्रूः स्वात्मा यस्य न खिद्यते।
जानास्यत्रोचितं त्वं हि किंचिन्नो वक्ष्यतःपरम्॥ १५१॥
अस्य दुःखोदधेः पारं कथं यामीति चिन्तयन्। सज्जनानां समाभूतिः सर्वेषामुपजीवनम्
क्षीरार्णवः पयो दत्ते हंसाय न बकाय किम्॥ १५३॥

दत्तात्रेय उवाच।

इति तस्य वचः श्रुत्वा दयार्द्रीकृतमानसा। धर्मदाने मतिं कृत्वा जगौ काञ्चनमालिनी
करिष्ये निष्कृतिं रक्ष इदानीं खलु मा शुचः। प्रतिज्ञां तु दृढां कृत्वा यतिष्ये तव मुक्तये
बहवो हि कृता माघा वर्षेवर्षे यथाविधि। श्रद्धापूर्वं मया भद्र ब्रह्मक्षेत्रे सितासिते॥
तां वदामि तु सङ्ख्यातिं तस्य धर्मस्य राक्षस!।

गूढो धर्मो हि कर्त्तव्यइत्यूचुर्विबुधा जनाः ॥ १५७ ॥
आर्त्ते दानं प्रशंसन्ति मुनयो वेदवादिनः । सागरे वर्षतो भद्र किं मेघस्य फलं भवेत्
अनुभूतं मया रक्षः स्वयं तत्पुण्यजं फलम् । तत्तु दास्यामि ते मित्र सद्यःपापविनाशनम्
निष्पीड्याऽथ ततो वस्त्रं जलं कृत्वा कराम्बुजे ।
ददौ सा माघजं पुण्यं तस्मै वृद्धाय रक्षसे ॥ १६० ॥
श्रृणु राजन्विचित्रं हि प्रभावं माघधर्मजम् । तदैवं प्राप्य तत्पुण्यं विमुक्ता राक्षसीतनुः
संभूतो देवताकारस्तेजोभास्करविग्रहः । देवयानं समारूढः सहर्षोत्फुल्ललोचनः ॥
द्योतमानस्तदा व्योम्नि भासयन्प्रभया दिशः । दिव्यरूपधरो रेजे द्वितीयइव भास्करः
ततोऽभिनन्दयामास स तां काञ्चनमालिनीम् । भद्रे वेत्तीश्वरो देवः कर्मणांयःफलप्रदः
तत्त्वयोपकृतं सर्वं यत्र मे नास्ति निष्कृतिः । इदानीमपि कारुण्यात्प्रसीदाऽनुग्रहं कुरु
शिक्षां विधेहि मे देवि सर्वनीतिमयीं शुभाम् । सर्वधर्मकरीं नूनं न कुर्वे पातकं यथा
तां श्रुत्वा त्वदनुज्ञातः पश्चाद्यामि सुरालयम् ॥ १६७ ॥

दत्तात्रेय उवाच ।

एतन्निशम्य तेनोक्तं प्रियं धर्ममयं वचः । अतिप्रीत्याऽब्रवीद्धर्मं राजन्काञ्चनमालिनी ॥
धर्मं भजस्व सततं त्यज भूतहिंसां सेवस्व साधुपुरुषाञ्जहि कामशत्रुम् ॥
अन्यस्य दोषगुणकीर्तनमाशु हित्वा सत्यं वदार्चय हरिं व्रज देवलोकम् ॥
देहेऽस्थिमांसरुधिरे स्वमतिं त्यज त्वं जायासुतादिषु सदा ममतां विमुञ्च
पश्याऽनिशं जगदिदं क्षणभङ्गुरं हि वैराग्यभावरसिको भव योगनिष्ठः ॥
प्रीत्या मया निगदितं तव धर्ममार्गं चित्ते निधेहि सकलं भव शीलयुक्तः ॥
संत्यज्य राक्षसतनुं धृतदेवदेहो ज्योतिर्मयो व्रज यथासुखमाशु नाकम् ॥
श्रुत्वा धर्मं ततो हृष्टःसंतुष्टो राक्षसोऽब्रवीत् । भव प्रमुदिता नित्यं सर्वदा शिवमस्तु ते
आचन्द्रार्कं रमस्व त्वं कैलासे शिवसन्निधौ । उमयाऽखण्डितं प्रेम तवास्तु वरवर्णिनि
धर्मनिष्ठा तपोनिष्ठा मातस्त्वं भव सर्वदा । मास्तु लोभःशरीरे तआपन्नार्ति सदा हर॥
इत्युक्त्वा तु प्रणम्याऽथ स तां काञ्चनमालिनीम् ।

जगाम राक्षसः स्वर्गं गन्धर्वैर्बहुभिः स्तुतः ॥ १७५ ॥

देवकन्यास्तदागत्य ववर्षुः पुष्पवृष्टिभिः । तस्याःकाञ्चनमालिन्या मूर्ध्नि हर्षसमाकुलाः

तामालिङ्ग्य ततः प्रोचुः कन्यकास्तु प्रियं वचः ।

कृतं भद्रे त्वया चित्रं राक्षसस्य विमोक्षणम् ॥ १७७ ॥

दुष्टस्यास्य भयात्कश्चिद्विशत्यस्मिन्न कानने । अधुनानिर्भयाह्यत्रविचरामो यथासुखम्

श्रुत्वा तद्वचनं राजंस्तासां काञ्चनमालिनी । हृष्टा तेनैव दानेन कृतकृत्या तदा सती॥

तं राक्षसं काञ्चनमालिनी वरा गन्धर्वकन्या परिमोच्य सत्वरम् ॥

क्रीडन्त्यमूभिः प्रययौ हरालयं प्रीत्या सपूर्णा च परोपकारया ॥ १८० ॥

संवादमेनं वरकन्यकेरितं भक्त्या परं यः श्रृणुयाच्च मानवः ।

न बाध्यते जातु सदा स राक्षसैर्धर्मे मतिस्तस्य भृशं हि जायते ॥१८१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे माघमाससमाहात्म्ये दिलीपवसिष्ठसंवादे राक्षसमोक्षो नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

## सप्तविंशत्यधिकशततमोऽध्यायः

### माघस्नानफलवर्णनम्

वसिष्ठ उवाच ।

कथितं माघमाहात्म्यं दत्तात्रेयेण भाषितम् । अधुनाऽहं प्रवक्ष्यामि माघस्नानस्य यत्फलम्

सर्वक्रतुवरिष्ठं तु सर्वदानफलप्रदम् । सर्वव्रततपस्तुल्यं माघस्नानं परन्तप ॥ २॥

स्नानेन माघस्य विशुद्धमानसाःपितॄन्दिवि स्थाप्य कुलद्वयस्य वै ।

स्वर्गं प्रयान्ति स्वयमुज्ज्वलानना वरैर्विमानैरुचिरैश्च कामगैः ॥ ३ ॥

ये मानवाःपापकृतोऽपि सर्वदा सदा दुराचाररता विमार्गगाः ।
स्नात्वा हि माघे हरिमर्चयन्ति ये मुञ्चन्ति तेऽपीह महाघसंचयम् ॥ ४ ॥
सत्येन हीनाःपितृमातृदुःखदा ह्यनाश्रमस्थाःकुलधर्मवर्जिताः ।
ये दाम्भिकास्तेऽपि नराः सतां गतिं स्नानैः प्रयान्त्यत्र हि माघसंभवैः ॥५
पुण्येषु तीर्थेषु च माघमासे स्नानं नराणामतिदुर्लभं भुवि ।
तस्माद्यतो ब्रह्मविदां पदं नरैः संप्राप्यते नात्र विचारणा मम ॥ ६ ॥
माघे तपोदानजपप्रसेवनं स्थानं हरेःपूजनमक्षयं नृप ! ।
तस्माद्यथाशक्ति नरैः प्रयत्नतः स्नात्वा प्रदेयं वसनान्नकाञ्चनम् ॥ ७ ॥
माघेऽन्नदाताऽमृतपःसुरालये हेरनश्च दाता वलभित्समीपगः ।
दीपाग्निवासांसि ददन्नरः सदा सूर्यस्य लोके वसति प्रभामयः ॥ ८ ॥
यज्ञैः सुदानैः सुतपोभिरुज्ज्वलैः सुब्रह्मचर्यार्चनयोगसेवया ।
शुद्धा भवन्तीह तथा न पापिनः स्नानैर्यथापुण्यभवैस्तु माघजैः ॥ ९॥
दुःखौघसंतप्तिमसह्ययातनां याम्यां न ते यान्त्यपि पापकारिणः ।
ये माघमासे वरतीर्थमज्जनं कुर्वन्ति चार्धोदितसूर्यमण्डले ॥ १० ॥
स्नात्वा च माघे हरिमर्चयन्ति ये स्वश्च्युता भूपतयो भवन्ति ।
भव्याः सुरूपाः सुभगाः प्रियम्वदा धर्मान्विता भूरिधनाः शतायुषः ॥११॥
दीप्तानले काष्ठचयो यथा हुतो भस्मावशेषो भवतीह तत्क्षणात् ।
स्नानेन माघस्य तथा विलीयते क्षुद्रोऽपि पापौघमहाघसंचयः ॥१२॥
कायेन वाचा मनसाऽपि पातकं ज्ञातं यदज्ञातमलङ्कृतं नरैः ।
स्नानं च माघे वरतीर्थसंभवं सर्वं दहेद्विष्णुरिवाशु हृद्गतः ॥ १३ ॥
संभुज्यमानाघफलं हि पार्थिव प्रमादतोऽपीह नृणां कदाचन ।
स्नानं हि माघस्य यतःप्रसज्यते तदैवमत्संक्षयमेति निश्चितम् ॥ १४ ॥
गन्धर्वकन्या पृथिवीशशापजं संभुज्यमानाघफलं दुरत्ययम् ।
स्नानाद्विमुक्ताः खलु माघमासजाद्वाक्यात्पुरा लोमशजातमद्भुतम् ॥ १५ ॥

सूत उवाच ।

श्रुत्वैतत्पार्थिवः प्रीत्या नत्वा तत्पादपङ्कजम् । श्रद्धया परया नम्रस्तं पप्रच्छ पुरोधसम्

भगवन्ब्रूहि कन्याभिः शापो ह्यभिगतः कुतः ।

कस्याऽपत्यानि तास्तासां नाम किं कीदृशं वयः ॥ १७ ॥

कथं लोमशवाक्येन विपाकाच्छापसंभवात् ।

विमुक्ताः कुत्र ताःसस्नुर्मासं ताः कति सङ्ख्यया ॥ १८ ॥

वसिष्ठ उवाच ।

श्रूयतां राजशार्दूल! धर्मगर्भा कथापरा । यथारणिर्वह्निगर्भा धर्मसूर्वह्निसूरिव ॥ १९ ॥

गन्धर्वः सुखसंगीतिस्तस्य कन्या प्रमोदिनी । सुशीलस्य सुशीला च सुस्वरा स्वरवेदिनः

सुतारा चन्द्रकान्तस्य चन्द्रिका सुप्रभस्य च । इमानि वरनामानि तासामप्सरसां नृप

कुमार्यः पञ्च सर्वास्ता वयसा सुसमाः पुनः ।

चन्द्रादिव विनिष्कान्ताश्चन्द्रिकेव समुज्ज्वलाः ॥ २२ ॥

चन्द्राननाः सुकेशिन्यश्चन्द्रामृतरसाधराः । नेत्रेष्वानन्दकारिण्यः कौमुदीकुमुदेष्विव

लावण्यपिण्डसंभूताश्चारुरूपामनोहराः । उद्भिन्नकुचकुम्भिन्यः पद्मिन्य इव माधवे ॥

उन्मील्य यौवनं कान्तं वल्लीव नवपल्लवैः । हेमगौराश्च हेमाभा हेमालङ्कारभूषिताः ॥

हेमचम्पकमालिन्यो हेमच्छविसुवाससः । स्वरग्रामावलीहासु विविधामूर्छनासु च ॥

तालदानविनोदेषु वेणुवीणाप्रवादने । मृदङ्गनादसंभिन्नं लास्यमार्गलवेषु च ॥ २७ ॥

चित्रादिषु विनोदेषु कलासु च विशारदाः । एवंभूतास्तु ताः कन्या मुमुहुः क्रीडने वने

पितृभिर्लालिताः सत्यश्च रुश्च धनदालये । कौतुकादेकदा पञ्च मिलित्वा मासि माधवे

कन्या मन्दारपुष्पाणि विचिन्वन्त्यो वनाद्वनम् ॥ २९ ॥

गौरीं समाराधयितुं वराङ्गनाः कदाचिदच्छोदसरोवरं ययुः ।

हेमाम्बुजानि प्रवराणि ताः पुनस्तस्मादुपादाय वरोत्पलैः सह ॥ ३० ॥

वैडूर्यशुद्धस्फटिकाच्छविद्रुमे स्नात्वा तडागे परिधाय चाम्बरम् ।

मौनेन च स्थण्डिलपिण्डिकामयीं स्वर्णस्य सिक्ताभिरुमां विनिर्ममुः ॥३१॥

समार्चितां चन्दनचन्द्रकुङ्कुमैरभ्यर्च्य गौरीं वरपङ्कजादिभिः ।
नानोपचारैश्च सुभक्तिभाविंतास्तालप्रयोगैर्ननृतुः कुमारिकाः ॥ ३२ ॥
गान्धारमाश्रित्य वरं स्वरं ततो गेयं सुतारध्वनिभिःसुमूर्च्छितम् ।
एणीदृशस्ताः प्रजगुः कलाक्षरं चारुप्रबन्धं गतिभिस्तु सुस्वरम् ॥ ३३ ॥
तस्मिन्सुनादे रसवर्षहर्षदे कन्यास्वलं निर्भरनृत्यवृत्तिषु ।
अच्छोदतीर्थप्रवरे तदा गतः स्नातुं मुनेर्वेदनिधेः सुताग्निपः ॥ ३४ ॥
रूपेण निःसीमतरो वराननः सरोजपत्रायतलोचनो युवा ।
विशालवक्षाः सुभुजोऽतिसुन्दरः श्यामच्छविः कामइवाऽपरो हि सः॥३५॥
स ब्रह्मचारी सशिखो विराजते दण्डेन युक्तो धनुषेव मन्मथः ।
एणाजिनप्रावरणः सुसूत्रधृद्धेमाभमौञ्जीकटिसूत्रमेखलः ॥ ३६ ॥
तं दृष्ट्वा ब्राह्मणं वालास्तास्तत्र सरसस्तटे ।
जहृषुः कौतुकाविष्टाः कोऽयं नो नयनातिथिः ॥ ३७ ॥
सन्त्यक्तनृत्यगीतास्तास्तस्यालोकनतत्पराः । हरिण्योलुब्धकेनेव विद्धाः कामेन सायकैः
पश्यपश्येतिजल्पन्त्यो मुग्धाः पञ्च ससंभ्रमम् । तस्मिन्विप्रवरे यूनि कामदेवभ्रमं ययुः
पुनःपुनस्तमभ्यर्च्य नयनैः पङ्कजैरिव । पश्चाद्विचारयामासुस्ताश्च कन्याःपरस्परम् ॥
यद्ययंकामदेवो हि रतिहीनः कथं व्रजेत् । अथाऽयमश्विनौ देवौ तौनूनं युग्मचारिणौ
गन्धर्वः किन्नरो वाऽथ सिद्धो वा कामरूपधृत् ।
ऋषिपुत्रोऽथ वा कश्चित्कश्चिद्वा मानुषोत्तमः ॥ ४२ ॥
अस्तु वा कश्चिदेवाऽयं धात्रा सृष्टो हि नः कृते । यथा भाग्यवतामर्थे निधानं पूर्वकर्मभिः
तथाऽस्माकं कुमारीणां गौर्यानीतो वरोत्तमः । करुणाजलकल्लोलप्लवार्द्रीकृतचित्तया
मया वृतस्त्वया चायं त्वया वृतस्तथा मया । एवं पञ्चसु कन्यासु वदन्तीषु नृपोत्तम!
श्रुत्वा तद्वचनं तत्र कृत्वा माध्याह्निकीः क्रियाः ।
आलोच्य हृदये सोऽपि विघ्नमेतदुपस्थितम् ॥ ४६ ॥
ब्रह्मविष्णुगिरिशादयः सुरा ये च सिद्धमुनयःपुरातनाः ।

तेऽपि योगबलिनो विमोहिता लीलया तदवलाभिरद्भुतम् ॥ ४७ ॥
योषितां नयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः ।
धन्विना मकरकेतुना हतः कस्य नो पतति हा ! मनोमृगः ॥ ४८ ॥
तावदेव नयश्रीर्विराजते तावदेव जनताभयं भजेत् ।
तावदेव दृढचित्तता भृशं तावदेव गणना कुलस्य च ॥४९ ॥
तावदेव तपसः प्रगल्भता तावदेव यमधारणं नृणाम् ।
यावदेव वनितेक्षणवाणैर्मोहयन्त्युरुमदैर्न मानुषाः ॥ ५० ॥
मोहयन्तु मदयन्तु रागिणो योषितः सुललितैर्मनोहरैः ।
मोहयन्ति मदयन्ति मामिमं धर्मरक्षणपरं हि कैर्गुणैः ॥ ५१ ॥
मांसशुक्रमलमूत्रनिर्मिते योषितां वपुषि निर्घृणेऽशुचौ ।
कामिनश्च परिकल्प्य चारुतां मा रमन्तु सुविमूढचेतसः ॥५२ ॥
दारुणो हि परिकीर्तितोऽङ्गनासन्निधिर्विमलबुद्धिभिर्बुधैः ।
यावदत्र न समीपगा इमास्तावदेव हि गृहं व्रजाम्यहम् ॥ ५३ ॥
समीपं तस्य यावद्धि नाऽऽगच्छन्तिवराङ्गनाः । वैष्णवेनप्रभावेण तावदन्तर्दधे द्विजः
तस्य योगबलाद्भूप गतस्यादर्शनं तदा । दृष्ट्वा तदद्भुतं कर्म ऋषिपुत्रस्यधीमतः ॥५५
वित्रस्तनयना बालाः कुरङ्ग्यइव कातराः । संभ्रान्तनयनाः शून्या ददृशुस्ता दिशो दश
इन्द्रजालं स्फुटं वेत्ति मायां जानाति वा पुनः ।
दृष्टोऽप्यदृष्टरूपोऽभूदित्यूचुश्च परस्परम् ॥ ५७ ॥
व्याप्तं तु हृदयं तासां सदैव विरहाग्निना । ज्वलद्दावानलेनेव सुस्निग्धं सान्द्रकाननम्
त्यक्त्वैन्द्रजालिकीं विद्यां कान्त ! दर्शय सत्वरम् ।
स्वात्मानं नो मनोयुक्तं प्राग्ग्रासे मक्षिकोपमम् ॥ ५९ ॥
हा ! कष्टं दर्शितः कस्माद्धात्रा त्वं घटितः पुनः ।
ज्ञातं महानुसंतापहेतोर्नस्त्वं विनिर्मितः ॥ ६० ॥
कच्चित्ते निर्दयं चेतः कच्चिदस्मासु नो मनः ।

कच्चिद्धूर्तोऽसि हे कान्त कच्चिन्मुष्णासि नो मनः ॥ ६१ ॥
कच्चिन्न प्रत्ययोऽस्मासु कच्चिदस्मान्परीक्षसे। कच्चिन्नर्मकलाशीलः कच्चिन्मायाविशारदः
कच्चिच्चित्ते प्रवेष्टुं च वेत्सि विज्ञानलाघवम्।
कच्चिन्निष्क्रमणोपायं न जानासि कुतः पुनः ॥ ६३ ॥
कच्चिद्विनाऽपराधं तु त्वमस्मासु प्रकुप्यसे। कच्चिद्दुःखं विजानासि परेषां विप्रलम्भजम्
त्वद्दर्शनं विना नूनं हृदयेश्वर! साम्प्रतम्। न जीवामोऽथ जीवामः पुनस्त्वद्दर्शनाशया
अस्मांश्च नय तत्र त्वं यत्र शीघ्रं गतो भवान्। त्वद्दर्शनहरो धाता व्यदधादङ्कुरच्छिदम्
सर्वथा दर्शनं देहि कारुण्यं भज सर्वथा। पर्यन्तं न प्रपश्यन्ति सर्वथा सज्जनाजनाः
इत्थं विलप्य ताः कन्याः प्रतीक्ष्य च बहुक्षणम्। पितुर्भिया गृहं गन्तुं शीघ्रमारेभिरेगतिम्
तत्प्रेमनिगडैर्बद्धा भृशं विरहविक्लवाः। कथंचिद्धैर्यमालम्ब्य ताः स्वं स्वं गृहमागताः
आगत्य पतिताः सर्वा जलयन्त्रसमीपतः।
किमेतन्मातृभिः पृष्टाः कुतः कालात्ययोऽभवत् ॥ ७० ॥

कन्याऊचुः।

क्रीडन्त्यः किन्नरीभिस्तु सार्धं सङ्गीतकं मुदा। संस्थितास्तेन न ज्ञातं दिवसादिसरोवरे
पथि श्रान्ता वयं मातः सन्तापस्तेन नस्तनौ। मोहेन महता वक्तुं न केनाऽप्युत्सहामहे
इत्युक्त्वा लुलुठुस्तत्र मणिभूमौ कुमारिकाः।
आकारं गोपयन्त्यस्ता मुग्धा जल्पन्ति मातृभिः ॥ ७३ ॥
काचिन्नर्तयति क्रीडामयूरं न मुदा तदा। न पाठयति तं कीरं पञ्जरेऽन्या कुतूहलात्
लालयेन्नकुलं नाऽन्या नोल्लासयति सारिकाम्। अपरातीवसंमुग्धानैव क्रीडति सारसैः
भेजिरे न विनोदांस्ता रेमिरे नैव मन्दिरे। ऊचिरे बान्धवैर्नालं वीणावाद्यं न चक्रिरे॥
कल्पद्रुमप्रसूनं यद्रसवत्तु सुधोपमम्। मन्दारकुसुमामोदि न पपुर्मधुरं मधु ॥ ७७ ॥
योगिन्यइव ताःकन्या नासाग्रन्यस्तलोचनाः। अलक्ष्यध्यानसन्तानाः पुरुषोत्तममानसाः
चन्द्रकान्तमणिच्छन्ने स्रवद्वारिकणद्रवे। क्षणं वातायने स्थित्वा जलयन्त्रे क्षणं क्षणात्
रचयन्ति क्षणं शय्यां दीर्घिकाम्भोजिनीदलैः।

वीज्यमानाः सखीभिस्ताः शीतलैः कदलीदलैः ॥ ८० ॥

इत्थं युगसमां रात्रिं मन्वानास्ता वरस्त्रियः । कथंचिद्धीरतां कृत्वा विह्वलाः सज्वराइव

प्रातर्व्योममणिं दृष्ट्वा मन्यमानाः स्वजीवितम् ।

विज्ञाप्य मातरं स्वां स्वां गौरीं पूजयितुं गताः ॥ ८२ ॥

स्नात्वा तेन विधानेन पुष्पैर्धूपैर्यथा तथा ।

विधाय पूजनं देव्या गायन्त्यस्तत्र ताः स्थिताः ॥ ८३ ॥

एतस्मिन्नन्तरे विप्रः स्नातुं सोऽपि समागतः । पित्राश्रमपदात्तस्मादच्छोदे च सरोवरे

मित्रं दृष्ट्वैव राजन्ते नलिन्यइव कन्यकाः । उत्फुल्लनयनाजातास्तं दृष्ट्वा ब्रह्मचारिणम्

गत्वा तदैव ताः कन्याः समीपं ब्रह्मचारिणः । सव्यापसव्यबन्धेन भुजापाशं च चक्रिरे

गतोऽसि धूर्त पूर्वेद्युर्गन्तुमद्य न शक्यते । वृतस्त्वं नूनमस्माभिर्नात्र तेऽस्तु विचारणा

इत्युक्तो ब्राह्मणः प्राह प्रहसन्बाहुपाशगः । युष्माभिरुच्यते भद्रमनुकूलं प्रियम्वचः ॥

प्रथमाश्रमनिष्ठस्य किन्तु नाद्याऽपि मे व्रतम् । वेदाभ्यसनशीलस्य पारं याति गुरोः कुले

आश्रमे यत्र यो धर्मो रक्षणीयः स पण्डितैः ।

विवाहोऽयमतो मन्ये न धर्मइति कन्यकाः ॥ ९० ॥

आकर्ण्य तस्य वाक्यानि तमूचुस्ता वचस्ततः ।

सकलध्वनिसोत्कण्ठाः कोकिला इव माधवे ॥ ९१ ॥

धर्मादर्थोऽर्थतः कामः कामाद्धर्मफलोदयः । इत्येव निश्चितं शास्त्रं वर्णयन्ति विपश्चितः

सकामो धर्मबाहुल्यात्पुरस्ते समुपागतः । सेव्यतां विविधैर्भोगैः स्वर्गभूमिरियं ततः ॥

श्रुत्वा तद्वचनं तासां प्राह गम्भीरया गिरा । तथ्यं वो वचनं किंतु समाप्येह स्वकंव्रतम्

प्राप्यानुज्ञां गुरोः सर्वं वैवाहं कर्म नान्यथा ।

इत्युक्ताः पुनरूचुस्ताःस्फुटं मूढोऽसि सुन्दर ! ॥ ९५ ॥

दिव्यौषधं ब्रह्मरसायनं च सिद्धिर्निधेः साधुकला वराङ्गनाः ।

मन्त्रस्तथा सिद्धिरसश्च धर्मतो नेमा निषेध्याः सुधिया समागताः ॥९६ ॥

कार्यं हि दैवाद्यदि सिद्धमागतं तस्मिन्नुपेक्षां न च याति नीतिगः ।

यस्मादुपेक्षा न पुनः फलप्रदा तस्मान्न दीर्घीकरणं प्रशस्यते ॥ ९७ ॥
सान्द्रानुरागाः कुलजन्मनिर्मलाः स्नेहार्द्रचित्ताः सुगिरः स्वयम्वराः ।
कन्याः सुरूपाः खलु चारुयौवना धन्या लभन्तेऽत्र नरास्तु नेतरे ।
क्व वयं वरसुन्दर्यः क्व चायं तापसो बटुः । दुर्घटस्य विधाने हि मन्ये धाताऽतिपण्डितः
तस्मादस्मानिदानीं तु स्वीकुर्यान्मङ्गलं भवान् ।
गान्धर्वेण विवाहेन ह्यन्यथा नो न जीवितम् ॥ १०० ॥
श्रुतवाक्यस्ततः प्राह ब्राह्मणो धर्मवित्तमः । भो मृगाक्ष्यः कथं त्याज्यो धर्मो धर्मधनैर्नरैः
धर्मश्चार्थश्च कामश्च मोक्षश्चैतच्चतुष्टयम् । यथोक्तं सफलं ज्ञेयं विपरीतं तु निष्फलम्
नाकालेऽहं व्रती कुर्यामतो दारपरिग्रहम् । न क्रियाफलमाप्नोति क्रियाकालं न वेत्ति यः
यतो धर्मविचारेऽस्मिन्प्रसक्तं मम मानसम् । तस्माच्छृणुत हे कन्या न समीहे स्वयम्वरम्
एवं ज्ञात्वाऽऽशयं तस्य समीक्ष्यैताः परस्परम् ।
करात्करं विमुच्याऽथ जग्राहाऽङ्घ्री प्रमोदिनी ॥ ५ ॥
भुजौ जगृहतुस्तस्य सुशीला सुस्वरा तथा ।
आलिलिङ्ग सुतारा च चुचुम्बे चन्द्रिका मुखम् ॥ ६ ॥
तथापि निर्विकारोऽसौ प्रलयानलसन्निभः । शशाप ब्रह्मचारी ताः क्रोधेनाऽत्यन्तमूर्छितः
पिशाच्यइव मां लग्नास्तत्पिशाच्यो भविष्यथ ।
एवं तेनाऽऽशु शप्तास्तास्तं संत्यज्य पुरःस्थिताः ॥ ८ ॥
किमेतच्चेष्टितं पाप ह्यनागसि जने त्वया । प्रिये कृत्येऽप्रियं कृत्वा धिक्तां धर्मज्ञतां तव
अनुरक्तेषु भक्तेषु मित्रेषु द्रोहकारिणः । पुंसो लोकद्वये सौख्यं नाशं यातीति नः श्रुतम्
तस्मात्त्वमपि नः शापात्पिशाचो भव सत्वरम् ।
इत्युक्त्वोपरता बाला निःश्वसन्त्यः क्षुधाकुलाः ॥ १११ ॥
तदा चान्योन्यसंरम्भात्तस्मिन्सरसि पार्थिव ! ।
ताः कन्या ब्रह्मचारी स(च) सर्वे पैशाचमागताः ॥ ११२ ॥
पिशाच्यः सपिशाचश्च क्रन्दमानाः सुदारुणम् । क्षपयन्ति विपाकं तं पूर्वोपात्तस्य कर्मणः

स्वकालेतुफलत्येवपूर्वोपात्तंशुभाशुभम् । स्वच्छायावच्च दुर्वारंदेवानामपिपार्थिव॥११४
क्रन्दन्तिपितरस्तासां मातरस्तत्र तस्य च । अप्रमादश्च बालानां दैवं हिदुरतिक्रमम् ॥
ततऊर्ध्वंपिशाचास्ते आहारार्थे सुदुःखिताः । इतस्ततश्च धावन्तो वसन्ति सरसस्तटे
एवं बहुतिथे काले लोमशो मुनिसत्तमः । पौषे मासि चतुर्दश्यामच्छोदे स्नातुमागतः

दृष्ट्वा तं ब्राह्मणं सर्वे पिशाचाः क्षुत्समाकुलाः ।
धावन्तो हन्तुकामास्ते मिलित्वा यूथवर्तिनः ॥ ११८ ॥

दह्यमानाः सुतीव्रेण तेजसा लोमशस्य च । असमर्थाः पुरःस्थातुं सर्वे ते दूरतःस्थिताः
तत्र वेदनिधिर्विप्रस्तदैव हि समागतः । समीक्ष्य लोमशं राजन्साष्टाङ्गं प्रणिपत्य सः

उवाच सूनृतां वाचं बद्ध्वा शिरसि चाञ्जलिम् ।
महाभाग्योदये विप्र ! साधूनां संगतिर्भवेत् ॥ १२१ ॥

गङ्गादिसर्वतीर्थेषु यो नरः स्नाति सर्वदा । यः करोति सतां सङ्गं तयोः सत्संगतिर्वरा
गुरूणां संगमो विप्र दृष्टादृष्टफलो भुवि । स्वर्गदो रोगहारी च किंतु सोपद्रवो मतः

इत्युक्त्वा कथयामास पूर्ववृत्तान्तमद्भुतम् ।
इमा गन्धर्वकन्यास्ता बटुः सोऽयं ममात्मजः ॥ १२४ ॥

सर्वे पिशाचरूपेण मिथःशापविमोहिताः । दीनाननास्तु तिष्ठन्ति तवाग्रे मुनिसत्तम ॥
त्वद्दर्शनेन बालानां निस्तारोऽद्य भविष्यति । सूर्योदये तमःस्तोमः किं न लीयेत गह्वरे
श्रुत्वा तल्लोमशो राजन्कृपार्द्रीकृतमानसः । प्रत्युवाचमहातेजास्तं मुनिं पुत्रदुःखितम् ॥

मत्प्रसादाच्च बालानां स्मृतिः सपदि जायताम् ।
धर्मं च वच्मि तं येन मिथःशापो लयं व्रजेत् ॥ १२८ ॥

वेदनिधिरुवाच ।

महर्षे कथ्यतां धर्मो मुच्यन्ते येन बालकाः । नायंकालोविलम्बस्यशापाग्निर्दारुणोयतः

लोमश उवाच ।

मया सार्धं प्रकुर्वन्तु माघस्नानं विधानतः ।
शापान्मुञ्चन्ति माघान्ते नान्यथा निष्कृतिर्भवेत् ॥ १३० ॥

शापः पापफलं विप्र पापनाशो भवेन्नृणाम् । माघस्नानेन तीर्थे च इतिमेनिश्चितामतिः
सप्तजन्मकृतं पापं वर्तमानं च पातकम् । माघस्नानं दहेत्सर्वं पुण्यतीर्थे विशेषतः ॥
प्रायश्चित्तं न पश्यन्ति यस्मिन्पापे मुनीश्वराः । पातकं पुण्यतीर्थेषु नश्येत्तदपि माघतः
ज्ञानकृन्मानसे माघस्तस्मान्मोक्षफलप्रदः । हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः ॥१३४
इन्द्रलोकप्रदोऽच्छोदे निर्दिष्टो वेदवादिभिः । सर्वपापहरो माघो मोक्षदो वदरीवने ॥
पापहा दुःखहारी च सर्वकामफलप्रदः । रुद्रलोकप्रदो माघो नार्मदे पापनाशनः ॥
यामुनः सूर्यलोकाय भवेत्कल्मषनाशनः । सारस्वतोऽघविध्वंसी ब्रह्मलोकफलप्रदः ॥
विशालफलदो माघो विशालायां द्विजोत्तम । पातकेन्धनदावाग्निर्गर्भहेतुक्रियापहः ॥

विष्णुलोकाय मोक्षाय जाह्नवः परिकीर्तितः ।
सरयूगण्डकीसिन्धुश्चन्द्रभागा च कौशिकी ॥ १३६ ॥

तापीगोदावरीभीमापयोष्णीकृष्णवेणिका । कावेरीतुङ्गभद्रा च अन्या याश्च समुद्रगाः

आशु माघी नरो याति स्वर्गलोकं विकल्मषः ।
नैमिषे विष्णुसायुज्यं पुष्करे ब्रह्मणोऽन्तिकम् ॥ १४१ ॥

आखण्डलस्य लोको हि कुरुक्षेत्रे तु माघतः । माघो देवह्रदे विप्र योगसिद्धिफलप्रदः॥
प्रभासे मकरादित्ये स्नानाद्रुद्रगणो भवेत् । देवक्यां देवतादेहो नरो भवति माघतः ॥
माघस्नानेन भो विप्र गोमत्यां न पुनर्भवः । हेमकूटे महाकालओङ्कारे चामरेश्वरे ॥
नीलकण्ठेऽर्बुदे माघाद्रुद्रलोके महीयते । सर्वासां सरितां विप्र संगमे मकरे रवौ ॥
स्नानेन सर्वकामानामवाप्तिर्जायते नृणाम् । माघस्तु प्राप्यते धन्यैः प्रयागे द्विजसत्तम

अपुनर्भवदं तत्र सितासितजलं यतः ॥ १४६ ॥
गायन्ति देवाः सततं दिविष्ठा माघः प्रयागे किल नो भविष्यति ।
स्नानान्नरा यत्र न गर्भवेदनां पश्यन्ति तिष्ठन्ति च विष्णुसन्निधौ ॥१४७॥
मज्जन्ति येऽपि त्र्यहमत्र मानवास्तीर्थे प्रयागे बहुपापकञ्चुकाः ।
व्रजन्ति ते नो निरयेषु धर्मिणः स्वर्गे शुभे चारु चरन्ति देववत् ॥१४८॥
तीर्थैर्व्रतैर्दानतपोभिरध्वरैः सार्धं विधात्रा तुलया धृतं पुरः ।

माघे प्रयागस्य तयोर्द्वयोरभून्माघो गरीयानतएव सोऽधिकः ॥ १४९ ॥
वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसञ्चितैः ।
योगैश्च संयान्ति नरा न तां गतिं स्नानेन माघस्य हि यान्ति यां गतिम्॥
स्नाताश्च ये मकरभास्करोदये तीर्थे प्रयागे सुरसिन्धुसंगमे ।
तेषां गृहद्वारमलङ्करोति किं भृङ्गावलिः कुञ्जरकर्णताडिता ॥ १५१ ॥
यो राजसूयाद्धयमेधयज्ञतः स्नानात्फलं संप्रददाति चाधिकम् ।
पापानि सर्वाणि विलोप्य लीलया नूनं प्रयागः स कथं न सेव्यते ॥१५२॥
अवन्तिविषये राजा वीरसेनोऽभवत्पुरा । नर्मदातीरमागत्य राजसूयं चकार सः ॥
षोडशैरश्वमेधैश्च स्वर्णवाटविराजितैः । स्वर्णभूषणयूपाढ्यैरीजे सोऽपि यथाविधि ॥
प्रददौ धान्यराशींश्च द्विजेभ्यः पर्वतोपमान् । वदान्यो देवताभक्तो गोप्रदः सस्सुवर्णदः
ब्राह्मणो भद्रको नाम मूर्खो हि नकुलस्तथा । कृषीवलो दुराचारः सर्वधर्मबहिष्कृतः॥
कृषिकर्मसमुद्विग्नो बन्धुभिश्चाप्यसंस्कृतः । इतस्ततः परिभ्रम्य निर्गतः क्षुत्प्रपीडितः ॥
दैवतः सार्थमाविश्य प्रयागं स समागतः । महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम्
अनघः स्नानमात्रेण भूत्वेह स द्विजोत्तमः । प्रयागाच्चलितस्तत्र पुनर्यस्मात्समागतः॥
स राजा सोऽपि विप्रश्च विपन्नावेकदा तदा ।
तयोर्गतिः समा दृष्टा मया शक्रस्य सन्निधौ ॥ १६० ॥
तेजो रूपं बलं स्त्रैणं देवयानं विभूषणम् । पारिजातमयी माला नृत्यं गीतं तयोः समम्
इति दृष्टं हि माहात्म्यं क्षेत्रस्य कथमुच्यते । माघः सितासिते विप्र राजसूयैः समो मतः
धनुस्त्रिशतविस्तीर्णे सितनीलाम्बुसंगमे । अपुनरावृत्तिर्माघी राजसूयी पुनर्भवेत् ॥
माघमासिकवातोऽपि सितासितजलं स्पृशेत् ।
अधर्म्यं न स्पृशेन्नूनं महापातकहा हि सः ॥ १६४ ॥
किमत्र बहुनोक्तेन श्रूयतां निश्चितं द्विज । समुद्भूतफलं पापं तीर्थे माघः प्रणाशयेत्
अत्र ते कथयिष्यामि सावधानमतिः शृणु । (पिशाचमोचनं नाम इतिहासं पुरातनम्
शृण्वन्त्वप्सरसो बालाः शृणोतु त्वत्सुतस्तथा ।

मत्प्रसादात्स्मृतिं लब्ध्वा पैशाच्यान्मुक्तिकामिनः ॥ १ ॥ )

पुरा देवद्युतिर्विप्रो वैष्णवो वेदपारगः ॥ १६६ ॥

पिशाचान्मोचयामास करुणाप्लुतमानसः ॥ १६७ ॥

दिलीप उवाच ।

कुत्र स्थितः कस्य पुत्रो नियमः कोऽस्य वा जपः ।

केन वा वैष्णवो वृत्तः के पिशाचाश्च मोचिताः ॥ १६८ ॥

एतद्विस्तरतः सर्वं कीर्तयस्व महामुने । कौतूहलं महापुण्यं श‍ृणुमस्त्वत्प्रसादतः ॥

वसिष्ठ उवाच ।

प्लक्षप्रस्रवणे पुण्ये सरस्वत्यास्तटे शुभे । तत्राश्रमपदं तस्य शैलमाश्रित्य शोभनम् ॥
शालैस्तालैस्तमालैश्च विल्वैर्बकुलपाटलैः । तिन्तिडीचिरिबिल्वैश्च चूतचम्पककाञ्चनैः
करञ्जैः कोविदारैश्च केसरैः कुञ्जराशनैः । नतिलकैः कर्णिकारैश्च कुम्भैःखादिरतिन्दुकैः
वासीरैः साल्वजम्बीरैः पीलूदुम्बरवेतसैः । शाकोटैरटरूषैश्च करहाटैर्वटद्रुमैः ॥१७३॥
घोण्टाकुटजपालाशैरशोकैः शोकहारिभिः । चम्बूनिम्बकदम्बैश्च क्षीरिकाकरमर्दकैः ॥
वीजपूरैः सनारिङ्गैरम्भाराजिविराजितैः । पनसैरसवद्भिश्च नारिकेलैः सदाफलैः ॥
सप्तच्छदैस्त्रिपत्रैश्च शिरीषामलकैः शुभैः । कर्कन्धूलकुचैरक्षैः पारिभद्रैर्वचादिभिः ॥
केतकैः सिन्दुवारैश्च तगरैः कुन्दमल्लिकैः । पद्मेन्दीवरकह्लारमालतीयूथिकादिभिः ॥
मालतीमोगरैश्चैव जातीफलविराजितैः । पुन्नागैः किंशुकैश्चैव बर्बरीतुलसीद्रुमैः ॥
आश्रमोरमणीयः स द्रुमैर्नानाविधैर्नृप ! । वनमध्ये नदी याति पुण्यतोया सरस्वती ॥

कूजन्ति सारसास्तत्र मदस्निग्धकलं सदा ।

नदन्ति कोकिलाः शब्दं गुञ्जन्ति च मधुव्रताः ॥ १८० ॥

बहुकोलाहलं भूप तद्वनं शुकसारिभिः । चरन्ति श्वापदास्तत्र विविधाः काननोत्तमे ॥
सदाफलं सदापुष्पं परागकणधूसरम् । आच्छन्नं काननं सर्वं मधुवृक्षैः समन्ततः ॥
नवपल्लवसंजातमञ्जरीभरवल्लिभिः । आश्लिष्टमभितो रम्यं प्रियाभिरिव वल्लभः ॥१८३॥

तस्य शापभयात्त्रस्तो वातो वाति समन्ततः ।

न वर्षन्त्यश्मभिर्मेघा न शोषयति भास्करः ॥ १८४ ॥
वनं नोपद्रवं तद्धि सदा सिद्धनिषेवितम् । आह्लादजनकं नित्यं वनं चैत्ररथं यथा ॥
तस्मिन्वसति धर्मात्मा देवद्युतिर्द्विजोत्तमः ।
पुत्रः सुमित्रो विप्रस्य लब्धो लक्ष्मीपतेर्वरात् ॥ १८६ ॥
नियमः श्रूयतां तस्य सर्वदा नियतात्मनः । ग्रीष्मे पञ्चतपा नित्यं सूर्यन्यस्तविलोचनः
वर्षत्काद्स्विनी यावद्वर्षास्वभ्रावकाशगः । वाते प्रवाते निष्कम्पो दुःसहो हिमवानिव
वसत्यप्सु स हेमन्ते ह्रदे सारस्वते द्विज । उपस्पृशति काले स त्रिवारं वारि निर्मलम्
पितॄन्देवानृषीन्नित्यं संतर्पयति श्रद्धया । ब्रह्मयज्ञपरो नित्यं सत्यवादी जितेन्द्रियः ॥
भूमौ विश्रम्य विश्रान्तः प्रदध्यौ प्रार्थयन्हरिम् ।
वन्यैर्जुहोत्यग्निहोत्रं श्रद्धयाऽतिथिपूजकः ॥ १९१ ॥
चान्द्रायणविधानेन कालं नयति सर्वदा । स्वयं विगलितैः पत्रैः फलैर्वृत्तिं समीहते ॥
अनुद्विग्नस्तपोनिष्ठो वेदवेदाङ्गपारगः । धमनीविकरालोऽसावस्थिमात्रकलेवरः ॥१९३
इत्थं जगाम वर्षाणां सहस्रं तस्य कानने । तदा जज्वाल शैलोऽसौतपसस्तस्यतेजसा
सोढुं न शक्यते भूतैस्तेजस्तस्य महात्मनः । वैश्वानरइवाभाति प्रज्वलंस्तपसा द्विज
गतवैराणि भूतानि समजायन्त तद्वने । मृगव्याघ्राखुमार्जारा मिथः क्रीडन्ति निर्भयाः
अन्योऽपि नियमस्तस्य श्रूयतामतिदुर्लभः । नारायणं त्रिकालं स संपूजयति नित्यशः
पुष्पाणां तु सहस्रेण विकचेन सुगन्धिना । वेदसूक्तविधानेन विष्णुध्यानपरायणः ॥
विष्णोः स प्रीतये विप्रःकुरुते कर्म चाऽखिलम् ।
दधीचेर्वरदानात्स संजातो वरवैष्णवः ॥ १९९ ॥
एकदा मासि वैशाखएकादश्यां महामुनिः ।
पूजां कृत्वा हरेरस्यां विचित्रामकरोत्स्तुतिम् ॥ २०० ॥
तदैव खगमारुह्य देवदेवो हरिः स्वयम् । आजगाम पुरस्तस्य तया स्तुत्याऽतिहर्षितः॥
तं दृष्ट्वा गरुडारूढं प्रत्यक्षं जलदच्छविम् । चतुर्बाहुं विशालाक्षं सर्वालङ्कारभूषितम् ॥
उद्भूतपुलको विप्रः सानन्दजललोचनः । जगाम शिरसा भूमौ कृतकृत्यमनास्तदा ॥

न ममौ तेन हर्षेण स ब्रह्माण्डोदरेऽपि हि। न सस्मार निजं देहं ब्रह्मभूतइवाभवत् ॥
ततः संभाषितः प्रीत्या हरिणा वैष्णवो मुनिः। देवद्युते विजानामिमद्भक्तस्त्वं मदाश्रयः
संन्यस्ताखिलकर्माऽसि मद्भावो मन्मनाः सदा।
वरं ब्रूहि प्रसन्नोऽस्मि स्तोत्रेणाऽनेन चानघ ! ॥ २०६ ॥
इति श्रुत्वा हरेर्वाक्यं प्रत्युवाच स तापसः। देवदेवारविन्दाक्ष स्वमायाधृतविग्रह ॥
त्वद्दर्शनात्सदा देव दुर्लभो नापरो वरः। ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः॥
त्वां साक्षात्कर्तुमिच्छन्ति सिद्धाश्च कपिलादयः।
अहं ममेतिपाशा ये मोहलोभाः शुभाशुभाः ॥ २०९ ॥
सहेतुकाश्च दह्यन्ते दृष्टे त्वयि परावरे। जन्मनः कर्मणो बुद्धेराविर्भूतं फलं मम ॥
यद्दृष्टोऽसि जगन्नाथ प्रार्थये किमतः परम्। न वरार्थं हि देवेश त्वत्पादपङ्कजं हृदि
चिन्तयामि सदा भक्त्या त्वद्गतेनान्तरात्मना। इममेव वरं याचे त्वद्भक्तिरचलामम ॥
अस्तु वै कमलानाथ प्रार्थये नाऽपरं वरम्। इतिश्रुत्वा वचस्तस्य प्रसन्नवदनो हरिः॥
प्रत्युवाच प्रसन्नात्मा एवमस्तु द्विजोत्तमम्। अन्यस्ते तपसः कश्चित्प्रत्यूहो न भविष्यति
एतच्च त्वत्कृतं स्तोत्रं ये पठिष्यन्ति मानवाः।
तेषां मद्विषया भक्तिर्निश्चला च भविष्यति ॥ २१५ ॥
धर्मकार्यं च यत्किंचित्साङ्गंसर्वं भविष्यति। ज्ञानेचपरमानिष्ठा तेषांस्थास्यति निश्चला
इत्युक्त्वाऽन्तर्हितस्तत्र देवदेवो जनार्दनः। देवद्युतिस्तदारभ्य नारायणपरोऽभवत् ॥

दिलीप उवाच।

महर्षेऽनुगृहीतोऽस्मि कथया पावनीकृतः। अनया विष्णुसंगत्या गङ्गयेवाऽहमद्य वै ॥
किंतु स्तोत्रं समाख्याहि प्रसन्नो येन माधवः। तस्यानघस्य विप्रस्य महत्कौतूहलं मम
त्वत्प्रसादादहं विप्र मन्ये प्राप्तं मनोरथम्। महतां संगतिः कस्य महत्त्वाय न कल्पते
कथयस्व प्रसादेन विष्णोः स्तोत्रमनुत्तमम्। येन तुष्टः स भगवान्ददौ तस्य च दर्शनम्

वसिष्ठ उवाच।

कथयामि रहस्यं ते यज्जप्तं स्तोत्रमुत्तमम्। प्राग्गृहीतं सुपर्णेन गरुडान्मयि चागतम्

अध्यात्मगर्भसारं तन्महोदयकरं शुभम् । सर्वपापहरं भूप स्वात्मज्ञानकरं परम् ॥२२३
ओश्मूनमोवासुदेवाय नमोविश्वाय चक्रिणे । भक्तप्रियाय कृष्णाय जगन्नाथाय शार्ङ्गिणे

स्तोता स्तुत्यः स्तुतिः सर्वं जगद्विष्णुमयं यदा ।
तदा संस्तूयते केन भक्तिर्मोदकरी नृणाम् ॥ २२५ ॥
यस्य देवस्य निःश्वासो वेदाः साङ्गाः ससूत्रकाः ।
का स्तुतिः प्रमुदे तस्य भक्त्याऽहं मुखरोऽभवम् ॥ २२६ ॥

चक्रवद्भ्रमते सर्वं त्रैलोक्यं सचराचरम् । अतस्त्वं गीयते देव चक्रपाणि वरायुध !

वेदो न वक्ति यं साक्षान्नच वाग्वेत्ति नो मनः ।
मद्विधस्तं कथं स्तौति भक्तिमान्वा कथं भवेत् ॥ २२८ ॥

ब्रह्मादिब्रह्मविष्णुस्त्वं त्वमेव सकलाश्रयः । स्रष्टा ब्रह्मनिदानं च शुद्धं ब्रह्म त्वमेव च

(कोऽयं कायस्तव विभो ! भित्त्वा स्पृशति कायिनम् ।
कायदोषैर्न चाऽऽघ्रातो नमस्तस्मै तु योगिने ॥ १ ॥ )

देवभावेन जागर्ति न निद्राति निजात्मनि । सुखसंदोहबुद्धिर्या सा त्वं विष्णो न संशयः
महदादयो महाभावास्तथा वैकारिका गुणाः । त्वमेव नाथ तत्सर्वं नानात्वं मूढकल्पना
केशकेशवरूपाभिः कल्पनातिसृभिस्तथा । त्वमेव कल्पसे ब्रह्मपुमानिव सुतादिभिः ॥

विदोषं विगुणं चैकं चिन्मूर्तिरखिलं जगत् ।
कवीनां भाति यत्तत्त्वं तं विष्णुं नौमि निर्मलम् ॥ २३३ ॥

यस्य ज्ञानेन कुर्वन्ति कर्मापि श्रुतिभाषितम् । निरीषणाजगन्मित्राः शुद्धं ब्रह्म नमामि तत्
ध्वस्तेतरञ्च सन्मात्रं यत्प्रबोधादुपासते । योगिनः सर्वभूतेषु सद्रूपं नौमि तं हरिम् ॥

ब्रह्माऽहमिति गायन्ति यं ज्ञात्वैकं वरा द्विजाः ।
पश्यन्तो हि त्वया तुल्यं देवं तं नौमि माधवम् ॥ २३६ ॥

मायया मोहवैचित्र्यं तथाऽहंममतां नृणाम् । यो नाशयति पापौघान्नमस्तस्मै चिदात्मने

प्रयाणे वाऽप्रयाणे च यन्नाम स्मरतां नृणाम् ।
सद्यो नश्यन्ति पापौघा नमस्तस्मै चिदात्मने ॥ २३८ ॥

मोहानललसज्ज्वालाज्वलल्लोकेषु सर्वदा । यत्पादाम्भोरुहच्छायां प्रविष्टश्च न दह्यते
यस्य स्मरणमात्रेण न मोहो नैव दुर्गतिः । न रोगा नैव दुःखानि तमनन्तं नमाम्यहम्

कामयन्ते प्रजा नैव धिषणाभ्यःसमुत्थिताः ।
लोकमात्मैव पश्यन्ति यं बुद्ध्वैकचरा जनाः ॥ २४१ ॥

शब्दार्थः संविदर्थश्च विष्णोर्नामपरो यदि । सत्येन तेन संसारो मासं स्पृशतु माधव
नारायणो जगद्व्यापी यदि वेदादिसंमतः । सत्येनं तेन निर्विघ्ना विष्णुभक्तिर्ममाऽस्तुवै
यो नवीजं विना वीजंवीजे योवीजभावितः । सविष्णुर्भववीजं मे सितविद्यासिनाद्यतु
त्रितनुर्नटवद्यस्तु सृष्टिस्थितिलयेषु च । गुणैर्भवति कार्येषु स प्रसीदतु मे हरिः ॥
दशधेहावतीर्णो यो धर्मत्राणाय केवलम् । अभ्यर्थितः सुरैः सर्वैः स प्रसीदतु मे हरिः
ब्रह्मादिस्तम्वपर्यन्तं प्राणिहृत्मन्दिरेऽमलः । एको वसति यो देवः स प्रसीदतु मे हरिः
इच्छां चक्रे स देवाग्र एकश्चैव वहुस्तथा । प्रविष्टो देवताः स्रष्टा स प्रसीदतु मे हरिः

हृत्खगः खसमः खादिः खातीतः खक्रियः खगः ।
खं ब्रह्माखादिभुक्चान्ते खमूर्तिस्त्वं मखाशनः ॥ २४९ ॥
यद्भासा यन्मुदा यस्य मायया सृज्यते जगत् ।
जाड्यं दुःखमसत्यं च स भवानेव तन्मयः ॥ २५० ॥
त्वत्सृष्टं मोदते विश्वं त्वत्त्यक्तमशुचिर्भवेत् ।
तत्सङ्गतोऽप्यसङ्गस्त्वं विकारस्तेन तेन हि ॥ २५१ ॥

भूतयोगजचैतन्यं चार्वाका यमुपासते ।सौगता ब्रुवते तर्कैस्त्वां बुद्धिं क्षणभङ्गुराम् ॥
शरीरपरिमाणंत्वां मन्यन्ते जिनदेवताः । ध्यायन्ति पुरुषं साङ्ख्यास्त्वामेवप्रकृतेः परम्
जन्मादिरहितः पूर्वं यः स्यादानन्दलक्षणम् । त्वामेवोपनिषद्ब्रह्म चिन्तयन्ति परस्परम्

खादिभूतानि देहश्च मनोवुद्धीन्द्रियाणि च ।
विद्याविद्ये त्वमेवाऽत्र नान्यत्त्वत्तोऽस्ति किञ्चन ॥ २५५ ॥
त्वं धाता सर्वभूतानां त्वमेव शरणं मम ।
त्वमग्निस्त्वं हविः शक्रो होता मन्त्रः क्रियाफलम् ॥ २५६ ॥

त्वमस्ति नास्ति वैकुण्ठ त्वांमहं शरणं गतः ।
त्वं कर्मफलदाता च दीक्षितानां क्रियाफलम् ॥ २५७ ॥
त्वं हेतुः सर्वभूतानां त्वमेव शरणं मम । युवतीनां यथा यूनि यूनां च युवतौ यथा ॥
मनोऽभिरमते तद्वत्प्रीतिर्मे रमतां त्वयि । अपि पापं दुराचारं नरं त्वत्प्रणतं हरे ॥
नेक्षन्ते किङ्करा याम्याउलूकास्तपनं यथा । तापत्रयमघौघश्च तावत्पीडयते जनम् ॥
यावत्स्मरति नो नाथ भक्त्या त्वत्पादपङ्कजम् ॥ २६१ ॥
यं न स्पृशन्ति गुणजातिशरीरधर्मा यं न स्पृशन्ति गतयस्त्वखिलेन्द्रियाणाम्
यं च स्पृशन्ति मुनयो गतसङ्गमोहास्तस्मै नमो भगवते हरये करोमि ॥२६२
स्थूलं विलाप्य करणे करणं निदाने तत्कारणं करणकारणवर्जिते च ।
इत्थं विलाप्य मुनयः प्रविशन्ति तत्र तस्मै नमोऽस्तु हरये मुनिसेविताय ॥
यद्ध्यानसंवहनघूर्णवशीकृतान्तामैश्वर्यचारुगुणिनीं सुखमोक्षलक्ष्मीम् ।
आलिङ्ग्य शेरतइहात्मसुखैकभाजस्तस्मै नमोऽस्तु हरये मुनिसेविताय ॥
जन्मादिभावविकृतेर्विरहस्वभावे यस्मिन्नयं परिधुनोति षडूर्मिवर्गः ।
यं तापयन्ति न सदा मदनादिदोषास्तं वासुदेवममलं प्रणतोऽस्मि हार्दम्
यद्ध्यानसङ्गतमलं विजहात्यविद्यां यद्ध्यानवह्निपतितं जगदेति नाशम् ।
यज्ज्ञानमुल्लसदसिद्यतिसंशयारिं तं त्वां हरिं विशदबोधघनं नमामि ॥२६६॥
चराचराणि भूतानि सर्वाणि च हरेर्वशे । यथाऽत्र तेन सत्येन पुरस्तिष्ठतु मे हरिः ॥
यथा नारायणः सर्वं जगत्स्थावरजङ्गमम् । तेन सत्येन मे रूपं प्रदर्शयतु केशवः ॥
भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि । ममाऽस्ति तेन सत्येन स्वं दर्शयतु केशवः
तस्यैवं शपथैःसत्यैर्भक्तिं तस्यानुचिन्तयन् । दर्शयामास चात्मानं स प्रीतः पुरुषोत्तमः
ततो दत्त्वा वरं तस्य पूरयित्वा मनोरथम् ।
जगाम कमलाकान्तः स्तुत्या विप्रेण तोषितः ॥ २७१ ॥
कृतकृत्यो द्विजःसोऽपि वासुदेवपरायणः । शिष्यैः सार्धं जपंस्तोत्रं तस्मिन्नास्ते तपोवने
कीर्तयेद्य इदं स्तोत्रं शृणुयाद्योऽपि मानवः ।

२६—

अश्वमेधस्य यज्ञस्य प्राप्नोति विपुलं फलम् ॥ २७३ ॥

आत्मविद्याप्रबोधं च लभते ब्राह्मणः सदा । न पापे जायते बुद्धिर्नैव पश्यत्यमङ्गलम्

बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा ।

नृणां भवति सर्वेषामस्य स्तोत्रस्य कीर्तनात् ॥ २७५ ॥

विचार्यार्थं जपेद्यस्तु श्रद्धया तत्परो नरः । स विधूयेह पापानि लभते वैष्णवं पदम् ॥

लभते वाञ्छितान्कामान्पुत्रपौत्रान्पशूंस्तथा । दीर्घमायुर्बलं वीर्यं लभते स सदा पठन्

तिलपात्र सहस्रेण गोसहस्रेण यत्फलम् । तत्फलं समवाप्नोति य इमां कीर्तयेत्स्तुतिम्

धर्मार्थकाममोक्षाणां यं यं कामयते सदा । अचिरात्तमवाप्नोति स्तोत्रेणाऽनेन मानवः

आचारे विनये धर्मे ज्ञाने तपसि सन्नये ।

नृणां भवति नित्यं धीरिमां संश्रृण्वतां स्तुतिम् ॥ २८० ॥

महापातकयुक्तो वा युक्तो वा ह्युपपातकैः ।

सद्यो भवति शुद्धात्मा स्तोत्रस्य पठनात्सकृत् ॥ २८१ ॥

प्रज्ञालक्ष्मीयशःकीर्तिज्ञानधर्मविवर्धनम् । दुष्टग्रहोपशमनं सर्वाशुभविनाशनम् ॥२८२॥

सर्वव्याधिहरं पथ्यं सर्वारिष्टनिषूदनम् । दुर्गतेस्तरणं स्तोत्रं पठितव्यं द्विजातिभिः ॥

नक्षत्रग्रहपीडासु राजचोरभयेषु च । अग्निचोरनिपातेषु सद्यः संकीर्तयेदिदम् ॥२८४॥

सिंहव्याघ्रभयं नास्ति नाभिचोरभयं तथा । भूतप्रेतपिशाचेभ्यो राक्षसेभ्यस्तथैव च ॥

पूतनाजृम्भकेभ्यश्च विघ्नेभ्यश्चैव सर्वदा ।

नृणां क्वचिद्भयं नास्ति स्तवे ह्यस्मिन्प्रकीर्तिते ॥ २८६ ॥

वासुदेवस्य पूजां यः कृत्वा स्तोत्रमुदीरयेत् । लिप्यते पातकैर्नासौ पद्मपत्रमिवाम्भसा

गङ्गादिपुण्यतीर्थेषु या स्नानैर्नाप्यते गतिः । तां गतिं समवाप्नोति पठन्पुण्यामिमांस्तुतिम्

एककालं द्विकालं वा त्रिकालं वाऽपि यः पठेत् ।

सर्वदा सर्वकालेषु सोऽक्षयं सुखमश्नुते ॥ २६७ ॥

चतुर्णामपि वेदानां त्रिरावृत्त्या च यत्फलम् । तत्फलं लभते स्तोत्रमधीयानः सकृन्नरः

अक्षय्यं धनमाप्नोति स्त्रीणां भवति वल्लभः ।

पूजां विन्दति लोकेऽस्मिञ्छ्रद्धया संस्मरन्हरिम् ॥ २६१ ॥
सर्वदा संपदायुक्तो विपदं नैव गच्छति । गोभिर्न ह्रियते स्तोत्रं नित्यं यः कीर्तयेद्धियत्
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
सद्यो नश्यन्ति भक्तानामेतं संश्रृण्वतां स्तवम् ॥ २६३ ॥
प्रातरुत्थाय योऽधीते शुचिर्विष्णुपरायणः । अक्षय्यं लभते सौख्यमिह लोके परत्र च
देवद्युतिप्रणीतं वै विष्णुप्रीतिकरं शुभम् । विष्णुप्रसादजननं विष्णुदर्शनकारकम् ॥
योगसारमिदं नाम स्तोत्रं परमपावनम् । यः पठेत्सततं भक्त्या विष्णुलोकं स गच्छति
इति ते कथितं स्तोत्रं गुह्यं पापप्रणाशनम् । अतऊर्ध्वं प्रवक्ष्यामि पिशाचस्य विमोचनम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माघमाहात्म्ये वसिष्ठदिलीपसम्वादेयोगसारस्तोत्रकथनं नाम
सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

---

# अष्टाविंशत्यधिकशततमोऽध्यायः

## चित्रराज्ञोवृत्तवर्णनम्

### वसिष्ठ उवाच ।

श्रूयतां ये पिशाचाश्च मोचितास्तेन तद्वने । आसीद्राजा चित्रनामा द्राविडे विषये पुरा
सोमान्वये महावीरः शूरः शस्त्रास्त्रपारगः । गजवाजिरथौघैश्च संपन्नो विक्रमी सदा
स्वर्णैर्नानाविधैरत्नैः पूर्णकोशो महाधनः । मध्ये नारीसहस्रस्य सदा क्रीडति तत्परः
स्त्रैणः कामी सदा लुब्धश्चण्डकोपः स पार्थिवः ।
न करोति वचो धर्म्यं सचिवैः समुदीरितम् ॥ ४ ॥
विष्णुं निन्दति सोऽत्यर्थं वैष्णवान्द्वेष्टि सर्वदा ।

कोऽसौ विष्णुः क्व दृष्टोऽसौ क्व चाऽस्ते केन कीर्त्यते ॥५॥
इत्थं न सहते विष्णुं स राजा दैवमोहितः । नारायणं भजन्ते ये तान्पीडयति कोपितः
न ब्राह्मणाञ्च वेदांश्च वैदिकं कर्म न व्रतम् । न दानं मन्यते दातुं पाखण्डस्थितिसंस्थितः
अनीत्या चण्डदण्डैश्च प्रजापीडां करोति सः । निष्ठुरो निर्दयः क्रूरः पुण्यकार्यपराङ्मुखः
च्युताचारोऽच्युतद्वेष्टा च्युताग्निश्च च्युतक्रियः ।
सोऽनुशास्ति जनं भूपः कालरूपइवाऽपरः ॥ ६ ॥
ततो वहुतिथे काले स राजा पञ्चतां गतः । वैदिकेन विधानेन लेभे नैवोर्ध्वदैहिकम्
अथ किङ्करयूथेन पीड्यमानो भृशं तदा । अयः कीलमये मार्गे तप्तसिक्ताप्रपूरिते ॥११
चण्डार्करश्मिसन्तप्ते वृक्षच्छायाविवर्जिते । तप्ताङ्गारप्रकीर्णे च वह्निज्वालासमाकुले॥
लोहतुण्डैश्च काकोलैर्हन्यमानः सुदारुणैः । वृकैर्दंष्ट्राकरालैश्च श्वभिर्घोरैश्च भक्षितः ॥
शृण्वन्क्रन्दितमन्येषां नृणां किल्बिषकारिणाम् ।
जगाम पार्थिवो लोकमन्तकस्य भयावहम् ॥ १४ ॥
शृणु भूपगतिं तस्य तस्मिँल्लोके सुदुःसहाम् । निरयान्निरयं यातः पर्यायेण स भूपतिः
आदौ प्रयातस्तामिस्रे दारुणे भूरिदुःखदे । पुनश्चैवाऽन्धतामिस्रे यत्र दुःखं निरन्तरम्
गतोऽनन्तरमत्युग्रं महारौरवरौरवम् । नरकं कालसूत्रं च महानरकमेव च ॥ १७ ॥
पश्चान्मग्नःस भूपालो दुस्तरे दुःखमूर्छितः । संजीवने महावीचौ तापने संप्रतापने ॥
प्रतापनरकं राजा दुःखाग्निप्लुष्टमानसः । संघातं च स काकोलं कुड्मलं पूतिमृत्तिकम्
लोहशङ्कुमृगीयन्त्रं पन्थानं शाल्मलिंनदीम् । प्रविष्टोऽथ महाभीमं दुर्दर्शं दुर्गमं पुनः ॥
असिपत्रवनं चैव लोहचारकमेव च । एवमेतेषु सर्वेषु पतित्वा पापकृन्नृपः ॥ २१ ॥
अविन्दन्नरके घोरे संतापं यातनामयम् । विष्णुप्रद्वेषघोरेण युगानामेकविंशतिः॥२२॥
भुक्त्वा च यातनां याम्यां निस्तीर्णनरको नृपः ।
समयाद्गिरिराजे तु पिशाचोऽभूत्तदा महान् ॥ २३ ॥
स भ्राम्यति दिशः सर्वा वने तस्मिन्बुभुक्षितः । न पश्यत्यशनं तोयंमेरावपि सदा गिरौ
कदाचित्पर्यटन्सोऽथ पिशाचः शोकपीडितः ।

प्लक्षप्रस्रवणारण्यं प्रविष्टो भावि सत्फलम् ॥ २५ ॥
विभीतकतरुच्छायां समाश्रित्य सुदुःखितः ।
हा ! हतोऽस्मीति चाक्रन्दद्घोरमुच्चैः पुनः पुनः ॥ २६ ॥
क्षुत्तृड्भ्यां मुह्यमानस्य सर्वभूतद्रुहो मम । जन्मनोऽस्य दुरन्तस्य कथमन्तो भविष्यति
आदौ पापसमुद्रेऽस्मिन्दुःखकल्लोलमालिनि ।
करावलम्बनं कोऽद्य निमग्नस्य प्रदास्यति ॥ २८ ॥
इत्थं तस्य पिशाचस्य रोदनं दीनचेतसः । देवद्युतिरधीयानः शुश्राव करुणामयम् ॥
समागम्य ततस्तत्र तं पिशाचं ददर्श सः । विकरालमुखं भीमं पिशङ्गनयनं कृशम् ॥
ऊर्ध्वमूर्धजकृष्णाङ्गं यमदूतमिवापरम् । ललज्जिह्वं च लम्बोष्ठं दीर्घजङ्घं शिराकुलम्
दीर्घाङ्घ्रिशुष्कतुण्डं च गर्ताक्षं शुष्कपञ्जरम् । अथाऽमुं कौतुकाविष्टः पप्रच्छ मुनिपुङ्गवः

देवद्युतिरुवाच ।

कोऽसि त्वं भीषणाकारः कुतो रोदिषि दारुणम् ।
अवस्थेयं कुतो ब्रूहि किं चाऽहं करवाणि ते ॥ ३३ ॥
ममाश्रमप्रविष्टा हि दुःखभाजो न जन्तवः । मोदन्ते केवलं सर्वे वैष्णवे भवने यथा ॥
वद त्वं सत्वरं भद्र दुःखस्यैतस्य कारणम् । कालक्षेपं न कुर्वन्ति प्राप्तेऽर्थे हि मनीषिणः

वसिष्ठ उवाच ।

श्रुत्वैतद्वचनं प्रीतः पिशाचस्त्यक्तरोदनः । उवाच दीनया वाचा प्रश्रयावनतस्तदा ॥

पिशाच उवाच ।

सर्वाङ्गव्यापि संतापं जहार त्वद्वचो मयि । ग्रीष्मे दावानलोद्भूतं वर्षन्मेघइवाचले ॥
यन्मेऽस्ति सुकृतं किंचित्तेन दृष्टोऽसि मे द्विज । नह्यसञ्चितपुण्यानां सद्भिरेकत्र संगमः
इत्युक्त्वा कथयामास पूर्ववृत्तान्तमात्मनः । विष्णुद्वेषप्रदोषेण दशामेतामहं गतः ॥
यन्नामप्राणान्मुक्तो हि स्मृत्वा विष्णुपदं व्रजेत् ।
पापिष्ठो हि हरौ तस्मिन्मम द्वेषोऽभवद्द्विज ॥ ४० ॥
यः पालयति भूतानि धर्मं याति जगत्त्रये ।

योऽन्तरात्मा च भूतानां तस्मिन्द्वेषो ममाऽभवत् ॥४६ ॥
कर्मणां फलदो योऽत्र सर्ववेदेषु गीयते । तपोभिरिज्यते विप्रैः स मे द्वेषवशं गतः ॥
त्यक्तक्रियैः प्रियारण्यैर्निःसङ्गैकचरैश्च यः । वेदान्ते यतिभिश्चिन्त्यः स मे द्वेषी हरिर्द्विज
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः । मुक्त्यर्थमर्चयन्तीह स विष्णुर्द्वेषितो मया
आदौमध्येऽवसाने यो विश्वधाता सनातनः । यस्य नैवादिमध्यान्ताः स मे द्वेषपदं ययौ
यन्मया सुकृतं कर्म कृतं प्राक्तनजन्मनि । विष्णुद्वेषाग्निना दग्धं तत्सर्वं भस्मसादभूत्
कथञ्चिदस्य पापस्य सीमां द्रक्ष्यामि चेदहम् ।
मुक्त्वा नारायणं नान्यामर्चयिष्यामि देवताम् ॥ ४७ ॥
विष्णुद्वेषाच्चिरं भुक्ता मया नरकयातना । निरयान्निसृतः सोऽहं पैशाचीं योनिमागतः
अधुना कर्ममन्त्रैः कैरथानीतस्त्वदाश्रमम् । यत्रत्वद्दर्शनार्कान्मे नष्टं दुखःमयं तमः ॥
प्राप्यते मरणं यत्र वन्धनं श्रीःसुखं वधूः । स तत्र नीयते स्वेन कर्मणा गलहस्तिना ॥
इदानीमुचितं कर्म ब्रूहि पैशाच्यनाशनम् । परोपकारकार्ये हि न धन्या मन्दगामिनः॥

देवद्युतिरुवाच ।

अहोमुष्णाति मायेयं देवासुरनृणां स्मृतिम् । यया देवेष्वपि द्वेषो जायते धर्मनाशनः
स्रष्टा पालयिता हन्ता जगतां यो महेश्वरः ।
आत्मा च सर्वभूतानां तं मूढो द्वेष्टि कः कथम् ॥ ५३ ॥
भवन्ति सर्वकर्माणि सफलानि यदर्पणात् । तद्भक्तिविमुखो मर्त्यः को न यातीह दुर्गतिम्
श्रुतिस्मृतिसदाचारविहितं कर्म केवलम् । सेवितव्यं चतुर्वर्णैर्भजेन्नारायणं सदा ॥५५॥
अन्यथा निरयं यान्ति विना ह्यागमसेवनात् ।
अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म सन्त्यजेत् ॥ ५६ ॥
स्वबुद्धिरचितैः शास्त्रैः प्रतार्येह तु बालिशान् ।
विघ्नन्ति श्रेयसो मार्गं लोकनाशाय केवलम् ॥ ५७ ॥
विष्णुं निन्दन्ति वेदांश्च तपो निन्दन्ति सद्द्विजान् ।
तेन ते नरकं यान्ति ह्यसच्छास्त्रनिषेवणात् ॥ ५८ ॥

अयमेव यथा राजा द्रविडो निरयं गतः । द्विषन्नारायणं देवं देवदेवं जगत्प्रभुम् ॥५६॥
तस्माद्द्वेषं हि देवेषु ब्राह्मणेषु विशेषतः । सं त्यजेत्पुण्यकामोऽत्र वेदबाह्यांक्रियां त्यजेत्
इत्युक्त्वा कथयामास पिशाचाय हितं मुनिः । प्रयागं गच्छ भो भद्र माघमासं विचारय
यत्र ते निश्चिता मुक्तिः पैशाच्यान्नात्र संशयः । तत्राप्लुता दिवं यान्ति श्रुतिरेषा सनातनी

विजहाति नरस्तत्र प्राक्तनं कर्म दुष्कृतम् ।
प्रयागस्नानतो नास्ति क्वाऽप्यन्यदधिकं परम् ॥ ६३ ॥

प्रायश्चित्तं तपोरूपं दानरूपं क्रियात्मकम् । यागयोगादिकं विद्धि प्रयागं पापिनामपि
स्वर्गापवर्गयोर्द्वारं तत्पृथिव्यामपावृतम् । सितासितोदवेर्णी या तां हित्वा भुवि नापरा
पापनैगडबद्धस्य च्छेदनैककुठारिका । क्व विष्णुः सूर्यतेजोऽग्निर्गङ्गायामुनसंगमः ॥
क्व वराकी नृणां तुच्छा पापराशितृणाहुतिः । मलीमसघनध्वंसे यथा शरदि चन्द्रमाः

भाति पापक्षयादूर्ध्वं नरो वेणीजलप्लुतः ।
सितासितस्य माहात्म्यमहं वक्तुं न ते क्षमः ॥ ६८ ॥

यत्तोयकणसंस्पृष्टो मुक्तः केरलको द्विजः । इतिवाक्यमृषेः श्रुत्वा पिशाचस्तुष्टमानसः
मुक्तदुःखइव प्रीतः पप्रच्छ प्रणयान्मुनिम् । कथं केरलदेशीयो द्विजो मुक्तो महामुने ॥

एतं कथय वृत्तान्तं संश्रित्य करुणा मयि ॥७१ ॥

देवद्युतिरुवाच ।

पिशाच शृणु पुण्यां मे कथां कथयतःशुभाम् । केरले वसुनामाऽत्र ब्राह्मणो वेदपारगः
दायादैर्हृतवित्तस्तु निर्धनो बन्धुवर्जितः । जन्मभूमिं परित्यज्य महादुःखेन दुःखितः ॥
देशाद्देशं परिभ्रम्य कालेन महता पुनः । प्रविश्य स महारण्यमीषद्व्याधिप्रपीडितः ॥

गच्छंस्तीर्थान्तरं श्रान्तः क्षुत्क्षामो विन्ध्यपर्वते ।
दुर्भिक्षेण मृतिं लेभे न दाहं चौर्ध्वदेहिकम् ॥ ७५ ॥

तेन कर्मविपाकेन तत्रैव गिरिगह्वरे । प्रेतीभूतश्चिरं कालमुवास निर्जने वने ॥ ७६ ॥
शीतातपपरिक्लिष्टो निराहारो निरुदकः । दिगम्बरो व्युपानत्को गिराहाहेतिनिःश्वसन्
इतस्ततः परिभ्रम्य वायुभूतः स केरलः । द्विजो न शरणं लेभे न सुखं कुत्रचित्तदा ॥

संशोचति स्म दुःखार्तो नैव पश्यति सद्गतिम् ।
सर्वदा दत्तदानं स भुङ्क्ते स्वं कर्मणः फलम् ॥ ७६ ॥
हविर्जुह्वति नाग्नौ ये गोविन्दं नाऽर्चयन्ति ये । भजन्ते नात्मविद्यां ये सुतीर्थविमुखाश्च ये
सुवर्णवस्त्रताम्बूलं मणिमन्नं फलं जलम् । आर्तेभ्यो न प्रयच्छन्ति सर्वे ते कृतहीनकाः
ब्रह्मस्वं च परस्वं च स्त्रीधनानि हरन्ति ये । बलेन च्छद्मना वापि धूर्त्ताश्च परवञ्चकाः
दाम्भिकाः कुहकाश्चौरा ये च पातकवृत्तयः । बालवृद्धातुरस्त्रीषु निर्दयाःसत्यवर्जिताः
अग्निदा गरदा ये च ये चाऽन्ये कूटसाक्षिणः ।
अगम्यागामिनः सर्वे ये चान्ये ग्रामयाजिनः ॥ ८४ ॥
पितृमातृस्नुषापत्यस्वदारत्यागिनश्च ये । ये कदर्याश्च लुब्धाश्च नास्तिका धर्मदूषकाः
त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् । गवाम्भूमेश्चहन्तारो येचाऽन्ये रत्नदूषकाः
परापवादिनः पापा देवतागुरुनिन्दकाः । महाक्षेत्रेषु सर्वेषु प्रतिग्रहरताश्च ये ॥ ८७ ॥
परद्रोहरता ये च तथा च प्राणिहिंसकाः । कुप्रतिग्राहिणः सर्वे ते भवन्ति पुनःपुनः ॥
प्रेतराक्षसपैशाचतिर्यग्वृक्षकुयोनिषु । न तेषां सुखलेशोऽस्ति इह लोके परत्र च ॥८९॥
तस्मात्त्यक्त्वा निषिद्धार्थं विहितं कर्म चाऽऽचरेत् ।
यज्ञं दानं तपस्तीर्थं मन्त्रं देवं गुरुं भजेत् ॥ ९० ॥
विपाकं कर्मणां दृष्ट्वा योनिकोटिषु दुस्तरम् । चतुर्भिरपि वर्णैश्च सेव्योधर्मोनिरन्तरम
इति प्रेतगतिं दृष्ट्वा पापबीजोत्थितां हि सः ।
कृत्वा धर्मोपदेशं च पुनस्तस्मै द्विजोऽब्रवीत् ॥ ९२ ॥
इत्थं स केरलः प्रेतो वर्तमानो गिरौ तदा । अतिवाह्य चिरंकालमपश्यत्पथिकं पथि ॥
वहन्तं द्वौ करण्डौ च वेणी जलयुतौ तथा ।
गायन्तं प्रमुखा(न्दे)देवं पुण्यश्लोकंजनार्दनम् ॥ ९४ ॥
तं दृष्ट्वा सहसा प्रेतो मार्गरोधं चकार सः । दर्शयामास चाऽऽत्मानं माभैषीरित्युवाचसः
पानीयं पातुमिच्छामि त्वत्तः कार्पटिकोत्तम ! ।
न दास्यसि जलं चेन्मे प्राणा यास्यन्ति मे द्रुढम् ॥ ९६ ॥

इति प्रेतवचः श्रुत्वा पान्थः प्रत्याह कौतुकात् ॥ ९७ ॥

कार्पटिक उवाच ।

कस्त्वं दुःखाभिभूतस्तु कृशो म्लानो दिगम्बरः । जीवशेषोमुमूर्षुश्च विकृतो भयवर्धनः
नवधूममयाकारश्चण्डश्चञ्चललोचनः । पद्भ्यामस्पृष्टभूमिस्त्वं निर्मांसोदरबाहुकः ॥

इति तद्वचनं श्रुत्वा प्रेतो वाक्यमथाब्रवीत् ॥ ९९ ॥

प्रेत उवाच ।

शृणु धर्मिष्ठ ते वच्मि येनाहमीदृशोऽभवम् । ब्राह्मणोऽदत्तदानोऽहं लोभीचमलिनक्रियः
परान्नं च सदाभुक्तमेकाकी मिष्टभोजनः । मया दत्ता न भिक्षाऽपि हन्तकारो न पुष्कलः
न कृतो वैश्वदेवस्तु प्रक्षिप्तो न बहिर्बलिः । भूतानां तु तृषार्तानां न हृता पयसा च तृट्
कदाचित्पितरो नैव तर्पिता अटता महीम् । नच श्राद्धं कृतं क्वाऽपि पूजिता नैव देवताः
वर्षातपपरित्राणं न दत्तं पादरक्षणम् । जलपात्रमदत्तं च ताम्बूलं नौषधं मया ॥१०४
न गृहे वसतिर्दत्ता नातिथ्यं कस्यचित्कृतम् । अन्धवृद्धाधनानाथदीनाः पानान्नतोषिताः

गवां ग्रासो न दत्तो वै न रोगी परिमोचितः ।
न दत्ता न हुता विप्र ! पवित्राश्चतिला मया ॥१०६ ॥
पृथिव्यां तिलदातारो न भवन्ति तु मद्विधाः ।
व्यतीपाते न दत्तं हि किंचित्स्वर्णं महाफलम् ॥ १०७ ॥

संक्रान्तावुपरागे च न दत्तं सूर्यचन्द्रयोः । पर्वाण्यन्यानि सर्वाणि जग्मुः शून्यानिमेद्विज

तिथयः कार्तिके मुख्या जाता वन्ध्याः सदा मम ।
पितृभ्यो नैव दत्तं वा ह्यष्टकासु मघासु च ॥ १०९ ॥

द्विजानां न कृता प्रीतिर्मन्वादिषु युगादिषु । न दत्तस्तिलतैलेन प्रदीपः कार्तिके मया
न स्नातो माघमासेऽहं रूपसौभाग्यकामदे । द्विजाय वेदविदुषे गौतम्यां सिंहगे गुरौ

मया संकल्पितं द्रव्यं न दत्तं पूर्वजन्मनि ।
न स्नातोऽहं कृष्णवेण्यां तथा कन्यागते गुरौ ॥ ११२ ॥
अग्निं प्रज्वाल्य काष्ठौघैः स्नातानां पौषमाघयोः ।

शीतार्तानां च विप्राणां न कृतो जाड्यनिग्रहः ॥ ११३ ॥
माधवादिषु मासेषु न दत्तं शीतलं जलम् । मया नारोपितोऽश्वत्थोन्यग्रोधोनैववर्धितः
वन्दीगेहान्मया मुक्तिर्न कृता प्राणिनां क्वचित् । न प्राणिभयसंत्रस्तो रक्षितःशरणागतः
नोपोष्यात्र त्रिरात्राणि तोषितो मधुसूदनः । कृच्छ्रातिकृच्छ्रपाराकंतथा चान्द्रायणंद्विज
अथान्यत्तप्तकृच्छ्रं च तथा सांतपनानि च । व्रतान्येतानि पुण्यानि जुष्टानीन्द्रादिभिःसुरैः
चरित्वा न मया तानि देहः संशोषितःपुरा । इत्थं पूर्वभवो वन्ध्योममजातो द्विजोत्तम!
पश्य द्विज महाक्रूरामद्भुतामत्र जन्मनि । गतिं दूरप्रबोधां तु मम पूर्वस्य कर्मणः ॥
सन्ति मांसानि मार्गेषु वृकव्याघ्रहतानि वै ।
फलान्यन्यानि शैलेऽस्मिन्क्षुकैस्त्यक्तानि सर्वतः ॥ १२० ॥
पुण्यानि च सुगन्धीनि फलानि रसवन्ति च ।
मूलानि तु सुभक्ष्याणि मृदूनि मधुराणि च ॥ १२१ ॥
नानाविधानि तिष्ठन्ति मधूनिसुबहून्यपि । स्रोतसां निर्झराणां च सन्तिवारीणिसर्वशः
सुलभेषु पदार्थेषु सर्वेष्वेतेषु पर्वते । नेक्षेऽहमशनं क्काऽपि दैवेनापि हतं सदा ॥१२३॥
वाताहारेण जीवामि यथा जीवन्ति पन्नगाः । पुनर्जीवामि भो विप्र देवयोनिप्रभावतः
बलेन प्रज्ञया नित्यं मन्त्रपौरुषविक्रमैः । सहायैश्चैव मित्रैश्च नाऽलभ्यं लभते नरः ॥
लाभालाभे सुखे दुःखे विवाहे मृत्युजीवने । भोगे रोगे वियोगे च दैवमेवहिकारणम्
कुरूपाः कुकुला मूर्खाः कुत्सिताचारनिन्दिताः । शौर्यविक्रमहीनाश्च दैवाद्राज्यानिभुञ्जते
काणाः खञ्जाअभव्याश्च नीतिहीनाश्च दुर्गुणाः ।
नपुंसकाश्च दृश्यन्ते दैवाद्राज्ये प्रतिष्ठिताः ॥ १२८ ॥
यैर्दत्ताश्च तिला गावो हिरण्यं वसनानि च । गौरीकन्याचयैर्दत्ता यैर्दत्ता च वसुन्धरा
शय्यासनानि ताम्बूलं मन्दिराणि धनानि च ।
भक्ष्यभोज्यानि दत्तानि चन्दनान्यगरूणि च ॥ १३० ॥
अटव्यां पर्वताग्रे च ग्रामे वा नगरेऽपिवा । पुरःपुरश्च तिष्ठन्ति तेषां भोगाः प्रयत्नतः ॥
सन्त्यत्र पर्वतेऽन्येऽपि राक्षसा बलवत्तराः । राक्षसाश्च पिशाचाश्च पिशाच्यश्चातिदारुणाः

कदाचिच्च कथञ्चिच्च क्वाऽपि यत्र स्वकर्मणा। लभन्ते चान्नपानानि पर्यटन्तो वनेवने॥

इति श्रुत्वाऽत्र तेभ्यश्च मा भयं भवतां भवेत्।
शुचिं गोविन्दभक्तं त्वां न ते द्रष्टुमपि क्षमाः॥ १३४॥

विष्णुभक्तितनुत्राणं नारायणपरायणम्। न स्पृशन्ति न पश्यन्ति राक्षसाः प्रेतपूतनाः
भूतवेतालगन्धर्वाः शाकिन्यश्चार्यका ग्रहाः। रेवत्यो वृद्धरेवत्यो मुखमण्ड्यस्तथाग्रहाः
यक्षाः बालग्रहाः क्रूरा दुष्टावृद्धग्रहाश्च ये। तथा मातृग्रहा भीमाग्रहाश्चान्येविनायकाः

कृत्याः सर्पाश्च कूष्माण्डा ये चाऽन्ये दुष्टजन्तवः।
न पश्यन्ति परं विप्र! वैष्णवं ब्राह्मणं शुचिम्॥ १३८॥

शुचिं रक्षन्ति भूतानि धर्मिष्ठं पीडयन्ति न। रक्षन्ति च शुचिं नित्यं ग्रहनक्षत्रदेवताः
गोविन्दनामा जिह्वाग्रे हृदि वेदस्तु संस्थितः। शुचिश्च दानशीलश्च त्वंसर्वत्राकुतोभयः
एवं ब्राह्मण तिष्ठामि भुञ्जानः कर्मणः फलम्। न शोचामीति मत्वाहं विमृश्यचपुनःपुनः
न दुनोमि तथा तावद्यावज्जम्बालिनीतटे। सारसोदीरितं वाक्यं श्रुतं पर्यटता मया॥

ब्राह्मण उवाच।

सारसोदीरितं वाक्यं कीदृशं हि श्रुतं त्वया।
तदहं श्रोतुमिच्छामि ब्रूहि त्वं प्रेत! सत्वरम्॥ १४३॥

प्रेत उवाच।

ब्रवीमि सारसं वाक्यं शृणु कार्पटिकोत्तम!। धूसरानामकक्षेऽस्मिन्नद्रीगिरिसमुद्भवा
सदाजलाशयोत्ताला मत्तदन्तिकुलाकुला। महाककुभशोभाढ्या स्निग्धजम्बूमनोहरा॥
तस्यास्तीरमहं प्राप्तो गाहमानो वनं घनम्। मयि तिष्ठति वै तत्र फलभोजनकाम्यया
वनान्तरात्समुड्डीय सारसो लक्ष्मणायुतः। आगत्य पुलिनं नद्याः सेवितुं बहुपक्षिभिः
पीत्वा तत्रैव पानीयं रमित्वा भार्यया सह। सुप्तः पक्षपुटे वामे प्रवेश्य च शिरोमुखम्
एतस्मिन्नन्तरे दृष्टः पादपादवतीर्य च। रक्ताननः सुरक्ताक्षो दण्डीदृढनखावलिः॥
लोमशो दीर्घलाङ्गूलश्चलचेष्टो हि वानरः। यत्राऽसौ सारसः सुप्तस्तत्र वेगेन चागतः

समागत्य च जग्राह सारसं चरणे दृढम्।

करभ्यां क्रूरया बुद्ध्या पश्यतां बहुपक्षिणाम् ॥ १५१ ॥
उड्डीयोड्डीयते सर्वे गताश्चान्यत्र खेचराः । सारसी भीतभीता च विरावान्कुर्वतीस्थिता
सारसो भग्ननिद्रस्तु त्रासाच्चलितलोचनः । अवलोकितवाञ्छीघ्रं तदोत्तास्यशिरोधराम्
विलोक्य वानरं दुष्टं हन्तुकामं सुदारुणम् । तदा सम्भाषयामास गिरा मधुरया खगः

अपराधं विना मां त्वं किं शाखामृग! बाधसे ।
सापराधा जना लोके वध्यन्ते भूमिपैरपि ॥ १५५ ॥

न पीडयितुमर्हन्ते त्वादृशा उत्तमा जनाः । अस्मानहिंसकान्साधून्परवृत्तिपराङ्मुखान्
जलशैवालभक्षांश्च खेचरान्वनवासिनः । स्वदाररतिशीलांश्च परदाराभिवर्जितान् ॥
न पीडयितुमर्हन्ति त्वद्विधा वानरोत्तम! । परापवादपैशुन्यान्द्विजान्परमसेवकान् ॥
शाखामृगविमुञ्चाशु सर्वथा मामनागसम् । जानामि तव जन्माहं नत्वंवेत्सितुमामकम्
इत्याकर्ण्यवचस्तस्य मुमोच सारसं तदा । चपलो वानरः शीघ्रमाह दूरे व्यवस्थितः ॥

वानर उवाच ।

ब्रूहि रे त्वं कथं वेत्सि मम जन्म पुरातनम् । त्वं पक्षी ज्ञानहीनश्च तिर्यक्चाहं वनेचरः

सारस उवाच ।

जानेऽहं तावकं जन्म जातिस्मरमितिस्फुटम् ।
त्वं हि विन्ध्याधिपो राजा प्राग्भवे पर्वतेश्वरः ॥ १६२ ॥

अहं पूज्यतमो विप्रस्तव वंशे पुरोहितः । तेन प्रत्यभिजानामि त्वां सम्यग्वानरोत्तम!

इमां पालयता भूमिं प्रजाः सर्वाः प्रपीडिताः ।
त्वया विवेकहीनेन भृशं संचिन्वता धनम् ॥ १६४ ॥

प्रजापीडनतापोत्थवह्निज्वालैस्तु वानर! । प्राक्त्वं दग्धः पुनः कुम्भीपाकेऽतिदारुणे ॥
पुनःपुनश्च दग्धेन जातेन च पुनःपुनः । नारकेण शरीरेण समास्त्रिशद्गतं त्वया॥१६६॥
कुर्वता दारुणाञ्छब्दान्रुदता च पुनःपुनः । कुम्भिपाकानले तीव्राह्यनुभूताश्च यातनाः

निस्तीर्णनरको भूयः पापशेषेण साम्प्रतम् ।
प्राप्तोऽसि वानरं जन्म येन मां हन्तुमिच्छसि ॥ १६८ ॥

विप्रस्योपवनात्पूर्वं पक्वरम्भाफलानिवै । अननुज्ञाप्य भुक्तानि त्वयाऽपहृत्य पौरुषात्
विपाकः कर्मणस्तस्य फलते पश्य दारुणः । वानरस्त्वं वने वासो ह्यधुना तेन वर्तसे
अशुभस्य शुभस्याऽपि पुरा विहितकर्मणः । भोगः क्रीडति भूतेषु नोल्लङ्घ्यस्त्रिदशैरपि
इत्थं त्वज्जन्म जानामि यथावत्तु सहेतुकम् । प्राप्तः सारसदेहोऽपि ज्ञानेनापरिमोहितः

प्रेत उवाच ।

इति श्रुत्वा कथां विप्र वानरोऽप्याह सारसम् ।
सम्यग्वेत्ति भवान्नूनं कथं त्वं पक्षितां गतः ॥ १७३ ॥

सारस उवाच ।

कथयिष्यामि तत्कर्म येनाऽहं दुर्गतिं गतः । पक्षियोनिं गतो येन तत्सर्वं श्रोतुमर्हसि
धान्यं खारिशतं साग्रमुत्सृष्टं हि त्वया पुरा । बहुभ्योब्राह्मणेभ्यश्च नर्मदायां रविग्रहे
पौरोहित्यमदाल्लोभाद्वञ्चयित्वा द्विजांस्तथा । किंचिद्दत्त्वा तु तेभ्यश्चगृहीतमखिलंमया
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात् । पतितः कालसूत्रेऽहं नरके रक्तकर्दमे ॥१७७॥
चलत्क्रिमिषु संपूर्णे दुर्गन्धे पूयफेनिले । आनाभेस्तत्र मग्नोऽस्मि लिहन्पूयमधोमुखः
तथोपरिमहागृध्रैर्भक्ष्यमाणस्तु वायसैः । क्रिमिभिस्तुद्यमानस्तु मम देहो निरन्तरम्॥

तस्मिञ्छोणितपङ्केऽहं निरुच्छ्वासोऽभवं तदा ।
मुहूर्तोऽपि महाकल्पसमो जातो ममाऽत्र वै ॥ १८० ॥

यातनाश्चानुभूताश्च समास्त्रियुतम्मया । वक्तुं च तन्न शक्नोमि दुःखं वानर नारकम्
पौरोहित्यं महाघोरं पापदं च स्वभावतः । देवोपजीवनं यत्र ब्राह्मणस्योपजीवनम् ।
राज्ञः प्रतिग्रहो घोरस्तेन दग्धा द्विजातयः । तेषामपि हरेद्द्रव्यं पुरोधास्तेन नारकी ॥
राजा यत्कुरुते पापं पुरा देहेन धीयते । तस्य तेन पुरोधाश्च गीयते तत्त्वदर्शिभिः ॥
दैवात्कथमपि प्राप्त उत्तारो नरकाम्बुधेः । मयाऽदौ देवयोगेन शकुनित्वमुपस्थितम् ॥
अपहृत्य पुरा कांस्यभाजनं भगिनीगृहात् । आक्षिकाय मया दत्तं तेनमे सारसी गतिः

इयं च ब्राह्मणी पूर्वं कांस्यचोरी सुदारुणा ।
तेनेयं सारसी जाता मम भार्या सधर्मिणी ॥ १८७ ॥

इत्थं वानरं ते सर्वं कथितं कर्मणः फलम् ।
वृत्तं च वर्तमानं च भविष्यं शृणु साम्प्रतम् ॥ १८८ ॥
अहं हंसो भविष्यामि त्वं च हंसो भविष्यसि । हंसीयमपि मद्भार्या सारसी च भविष्यति
देशे च कामरूपे वै स्थास्यामो वै यथा सुखम् ।
योगिनीं भाविकल्याणीं यास्यामस्तदनन्तरम् ॥ १९० ॥
ततश्च मानुषं जन्म प्राप्स्यामो दुर्लभं पुनः । श्रेयस्तद्विपरीतं च प्राणिभिर्यत्र साध्यते
एवं सर्वांच्छिवोजन्तून्मोहयित्वा स्वमायया ।
सुखैर्भुनक्ति दुःखैश्च नास्मानेव तु केवलम् ॥ १९२ ॥
अयं लोके प्रवृत्तश्च मार्गो विविधनिर्मितः । धर्माधर्ममयोऽत्यर्थे सुखदुःखफलात्मकः॥
सेवितः प्राणिभिः सर्वैः सर्वदा वा पुनःपुनः । देवासुरनरव्याघ्रक्रिमिकीटजलेचरैः ॥
नाऽतिक्रान्तो हि केनाऽपि पन्थाऽयं(?) दुःखकण्टकः ।
विरक्तान्योगिनो ध्यायं विना वेदान्तपारगान् ॥ १९५ ॥
अणोर्वापि गुरोर्वापि पुण्यापुण्यस्य कर्मणः । ददातीह फलं ज्ञात्वा देशं कालं महेश्वरः
इत्थं विधिविधानज्ञां मायां ज्ञात्वेश्वरस्य च ।
न शोचन्ति न तप्यन्ति न व्यथन्ति महाधियः ॥१९७॥
नान्यथा शक्यते कर्तुं विपाकः पूर्वकर्मणाम् । उपायैः प्रज्ञया वाऽपि शाखामृगसुरैरपि
पुरा त्वं भूपतिर्जातः पश्चाज्जातोऽसि नारकी ।
अधुना वानरो भूयो जन्म प्राप्स्यसि तादृशम् ॥ १९९ ॥
इति मत्वा विशोकस्त्वं शाखामृगयथासुखम् । प्रतीक्षां कुरु कालस्य रममाणोऽत्र कानने
अहमप्येवमीशानमायाबद्धो वनेवने । क्षपयिष्यामि वै जन्म धैर्यमास्थाय सारसम्

वानर उवाच ।

मया त्वं पूजितः पूर्वं नौमि त्वामधुनाऽप्यहम् ।
जातिस्मरोऽसि जानामि सर्वं मत्पौर्वदैहिकम् ॥ २०२ ॥
तिष्ठ सारस सारस्या शिवमस्तु सदा तव । त्वद्वाक्याद्गतमोहोऽहं विचरिष्यामि सर्वदा

प्रेत उवाच ।

इमं रम्यं विचित्रं च पावनं परमं द्विज । पक्षिवानरसम्वादं श्रुतं यावन्नदीतटे ॥२०४॥
तावन्ममापि बोधोऽभूत्तेन शोकः क्षयं गतः । इदानीं जाह्नवीतोयमाहात्म्यं परमाद्भुतम्
दृष्ट्वाऽत्र ब्राह्मणश्रेष्ठ त्वां याचे जाह्नवीजलम् । प्रेतत्वात्तर्तुकामोऽहं तीव्रतृष्णाप्रपीडितः
अस्मिन्नेवाचले दृष्टं मयाश्चर्य च वै द्विज । गङ्गातोयस्य तावद्धि पातुमिच्छामि तज्जलम्
पारियात्रोद्भवः कोऽपि ब्राह्मणो ग्रामयाजकः । अयाज्ययाजनाद्विन्ध्ये संभूतो ब्रह्मराक्षसः

अस्मात्सङ्गस्य लोभेन स्थितोऽसौ हायनाष्टकम् ।
तस्याऽस्थीनि सुपुत्रेण संचितानि द्विजोत्तम ॥ २०९ ॥
क्षिप्तान्यानीय गङ्गायां तीर्थे कनखलेऽमले ।
तत्क्षणादेव मुक्तोऽसौ राक्षसत्वात्सुदारुणात् ॥ २१० ॥

इतिगङ्गाजलस्नानमहिमामहदद्भुतम् । साक्षाद्दृष्टो मया तेन गाङ्गेयं प्रार्थितं जलम् ॥
पुरस्ताद्यत्कृतस्तीर्थे मया भूरि परिग्रहः । न कृतस्तु प्रतीकारस्तस्य जाप्यादिलक्षणः
तेन मे प्रेतरूपस्य दुर्लभोदकभोजनम् । सहस्रं यत्र वर्षाणामतीतं विन्ध्यपर्वते ॥२१३
इति ते कथितं सर्वं हित्वा लज्जां गरीयसीम् । इदानीं धार्मिकश्रेष्ठ जलदानेन सत्वरम्
संतर्पय ममप्राणान्कण्ठमात्रावलम्बितान् । दुर्लभं प्रेतभावेऽपि जीवितंप्राणिनामिह ॥
शरीरं रक्षणीयं हि सर्वथा सर्वदा नरैः । नहीच्छन्ति तनुत्यागमपि कुष्ठादिरोगिणः ॥

देवद्युतिरुवाच ।

इतितद्वचनं श्रुत्वा विस्मयं परमं गतः । पथिकश्चिन्तयामास कृपां प्रेते समुद्वहन् ॥
पापपुण्यफलंलोकेप्रत्यक्षं दृश्यते खलु । देवदानवमानुष्यं तिर्यक्त्वं क्रिमिकीटकम् ॥
नानायोनिषु जन्मानि नानाव्याधिप्रपीडनम् । मरणं बालवृद्धानामन्धत्वंकुब्जता तथा
ऐश्वर्यं च दरिद्रत्वं पाण्डित्यं मूर्खता तथा । एताश्चरचना लोके भवन्ति कथमन्यथा

ते धन्याः कर्मभूमौ ये न्यायमार्गार्जितं धनम् ।
सत्पात्रेभ्यः प्रयच्छन्ति कुर्वन्ति चात्मनो हितम् ॥ २२१ ॥

भूमिरत्नहिरण्यानि गावो धान्यं गृहं गजाः । रथाश्ववसनग्रामाः सिद्धमन्नं फलं जलम्

कन्यादिव्यौषधान्नानि च्छत्रोपानद्वरासनम्। शय्याताम्बूलमाल्यानितालवृन्तंमरासनम्
सर्वमेतत्प्रदातव्यं लोकत्रयजिगीषुभिः। दत्तं हि प्राप्यते स्वर्गे दत्तमेव हि भुज्यते॥
छत्रचामरयानानि वराश्ववरवारणाः। हर्म्याणिवरशय्याश्च गोमहिष्यो वरास्त्रियः
रत्नभूषणमुक्ताश्च पुत्रादास्यो महाकुलम्। आयुरारोग्यमैश्वर्यं कलाविद्यासु कौशलम्
दानस्यैव फलं सर्वं प्राप्यते भुवि मानवैः। तस्माद्देयं प्रयत्नेन नाऽदत्तमुपतिष्ठति॥
धर्मिष्ठेन तु पान्थेन गाथेयं समगायत। इति श्रुत्वा पुनः प्रेतः प्रोवाच ह्यार्त्तमानसः॥

मन्ये धर्मज्ञकल्पोऽसि पान्थ! त्वं नाऽत्रसंशयः।
देहि मे जीवनं वारि चातकाय घनो यथा॥ २२६॥

एतस्मिन्प्राणदाने हि मा विलम्बं कृथा बहु। ततः प्रत्याह पान्थस्तु वचनं न्यायगर्भितम्
भृगुक्षेत्रे शृणु प्रेत! पितरौ मम तिष्ठतः। तदर्थं तीर्थराजस्य मया वारिसमाहृतम्॥
तत्सितासितपानीयं मध्ये च प्रार्थितं त्वया। न जाने धर्मसंदेहः किमत्र मम युज्यते
बलाबलं विचारार्थं करिष्ये प्रबलं विधिम्। वेदेभ्यो धर्मशास्त्रेभ्यो नाहं मानेनकेवलम्
हयमेधादियज्ञेभ्यः सर्वेभ्योऽप्यधिकं मतम्। ऋषिभिर्देवताभिश्च प्राणिनां प्राणरक्षणम्
इति दत्त्वा वरं वारि कृत्वा प्रेतस्य रक्षणम्। पित्रर्थं पुनरादाय जलं नेष्यामि पावनम्
एष मे प्रबलो भाति शुद्धधर्मप्रदो विधिः। परोपकरणादन्यत्सर्वमल्पं स्मृतं बुधैः॥

परोपकारिभिर्दत्ता अपि प्राणा नृभिर्मुदा।
अद्भिः परोपकारः स्यात्किंन लब्धं मया पुनः॥ २३७॥

दधीचिना पुरा गीतः श्लोकोऽयं श्रूयते भुवि। सर्वधर्ममयः सारः सर्वधर्मज्ञसम्मतः॥
परोपकारः कर्तव्यः प्राणैरपि धनैरपि। परोपकारजं पुण्यं तुल्यं क्रतुशतैरपि॥२३९॥
इत्युक्त्वा प्रददौ तोयं गङ्गायामुनसंभवम्। प्रेताय प्राणरक्षार्थं स धर्मिष्ठो वरो द्विजः

प्रेतः प्रीतो जलं पीत्वा ह्यभिषिच्य शिरस्तथा।
प्रजहौ प्रेतदेहं तं दिव्यदेहोऽभवत्क्षणात्॥ २४१॥

तदाश्चर्यं महद्दृष्ट्वा निजगाद स केरलः। अहो विमुक्तः प्रेतत्वाद्वेणीपानीयबिन्दुभिः
ब्रह्माऽपि नैव शक्नोति मन्ये वक्तुमपां गुणम्। गङ्गातोयं महादेवो धत्ते के कथमन्यथा

अचिन्त्यशक्तिगङ्गाम्भस्तिलमात्रं तु यः पिबेत् ।
देवो भवेत्स सिद्धो वा गर्भेनैव च संविशेत् ॥२४४ ॥
न गङ्गासदृशी सिद्धिर्न गङ्गा सदृशी मतिः । न गङ्गासदृशी मुक्तिर्गङ्गासर्वाधिका यतः
तस्मात्सर्वप्रयत्नेन महाभक्त्या च धार्मिक ! । करस्थं तस्य कैवल्यंयो गङ्गां सेवतेसदा
आयुष्मान्भव पान्थ त्वं मा धर्मविरतो भव । त्वयाऽहं तारितः सद्योगङ्गाम्बुकणदानतः
इत्युक्त्वा प्रस्थितो नाकं पिशाचस्तु स केरलः ।
आशीर्भिरभिनन्द्याऽथ पान्थं बन्धुवरं नरम् ॥ २४८ ॥
प्रेतं विमोक्ष्य पान्थोऽपि पुनरादाय तज्जलम् । गतस्तेनैवमार्गेणस्मरंस्तीर्थोदकौतुकम्

वसिष्ठ उवाच ।

इत्थं प्रयागमाहात्म्यंश्रुत्वा नत्वा च तं मुनिम् । प्रयागं सहसा माघे पिशाचःसत्वरंगतः
स्नात्वा सितासिते सोऽपि माघमासे द्विजोत्तम ! ।
पिशाचःक्षीणपापस्तु पैशाचीं विजहौ तनुम् ॥ २५१ ॥
दिव्यदेहस्ततो भूत्वा द्राविडो भूपतिस्तदा । स्तुवन्नारायणं देवं भक्त्या दोषविवर्जितः
गन्धर्वैः स्तूयमानस्तु नाकनारीसुपूजितः । उत्तमेन विमानेन पुरन्दरपुरं ययौ ॥१५३॥
इति ते कथितं विप्र पूर्ववृत्तं सकौतुकम् । इतिहासं द्विजश्रेष्ठ सद्यः पातकनाशनम् ॥
ज्ञानदं मोक्षदं विप्र श्रुतं दुर्गतिनाशनम् । इति ते कथितं सर्वं पुरावृत्तं सकौतुकम् ॥
इतिहासं द्विजश्रेष्ठ श्रुतं दुर्गतिनाशनम् । अधुना तु मया सार्धमिमाः कन्याः सुतश्चये
त्वं चायाहि प्रयागं वै सर्वे सद्गतिमीप्सवः । माघस्नानं प्रकुर्मोऽत्र देवानामपिदुर्लभम्
तत्र मोक्ष्यन्ति पैशाच्यं सद्यः पापसमुद्भवम् ॥ २५८ ॥

महेश उवाच ।

एवं वसिष्ठवक्त्राब्जकथामधुरसं मुदा ।
पीत्वा प्रमुदिताः सर्वे निस्तीर्णा नरकार्णवात् ॥ २५६ ॥
प्रस्थितास्तेन सार्धं ते सत्वरं व्योम्निहर्षिताः । दिलीप श्रृणु तत्सर्वं तत्तीर्थंतुसितासितम्
सत्वरं व्योममार्गेण काममासाद्यदुःसहाः । समागम्य तदा तत्र संहृष्टहृदयाश्च ते ॥

अथोचे लोमशस्तत्र सदयं गगनाङ्गणे। पश्यन्तु श्रद्धया सर्वे तीर्थराजमिमं भुवि॥
विना ज्ञानं प्रयागेऽस्मिन्मुच्यन्ते सर्वजन्तवः। इष्ट्वात्रैव महायज्ञं स्रष्टुकामः प्रजापतिः

अवाप सृष्टिसामर्थ्यं ततः सृष्टिं चकार सः।
अत्र नारायणः सस्नौ पत्नीकामः सितासिते॥ २६४॥
अतः स लब्धवाँल्लक्ष्मीं भार्याममृतमन्थने।
उषित्वा चाऽत्र षण्मासं स्नात्वा वेण्यां यथेच्छया॥ २६५॥

त्रिपुरं घातयामास त्रिवाणेन त्रिशूलभृत्। इमानि त्रीणि कुण्डानि दीप्तान्यजस्रवह्निभिः
एष तृप्तिं गतो वह्निर्यः केनापि च पुष्यति। अत्र देवास्त्रयस्त्रिंशत्तृप्ता मुमुदिरे भृशम्॥
आविर्भूतो महेशोऽत्र नीलकण्ठः कपालभृत्। अनिशं स सुरैः सेव्यआयातोऽञ्जलयेबटुः

मृकण्डसूनुना कल्पे प्रविश्य यन्मुखे स्थितम्।
लोके ज्वालाकुले सोऽयं योगरूपी जनार्दनः॥ २६६॥

सेयं भागीरथी शम्भोः सर्वदुःखापहारिणी। सिद्ध्यर्थं सेव्यते सिद्धैर्भुक्तिमुक्तिफलप्रदा
अनिशं भूतिदा या च स्वर्गमार्गे ह्यनुत्तमा। स्वर्गहेतुश्च या देवी सेयं भागीरथी नदी
यदम्भःस्नानमात्रेण विकर्तनसलोकताम्। लभन्ते प्राणिनः सर्वे नदी सा यमुनास्वयम्
अनयोः पुण्यनद्योश्च संगमः सुखदो मुने। अत्र स्नाता न पच्यन्ते नरके ज्ञानभाविताः

विना ज्ञानं प्रयागेऽस्मिन्मुच्यन्ते सर्वजन्तवः।
अन्यच्च श्रूयतां विप्र! इतिहासं पुरातनम्॥ २७४॥

शृण्वतां सर्वपापघ्नं सर्वरोगविनाशनम्। ऋचीकेन पुरा शप्तो गन्धर्वो वायसोऽभवत्

शापं मुमोच सोऽत्रैव स्नातः सद्यः सितासिते।
वासवस्य तु शापेन स्वर्गाद्भ्रष्टाऽप्सरोर्वशी॥ २७६॥

स्वर्गकामा च सा सस्नौ लेभे स्वर्गंततोऽचिरात्। पुत्रं च शङ्करं लेभे ययातिर्नाहुषोमुने

पुत्रकामः प्रयागे हि स्नात्वा पुण्ये सितासिते।
धनकामः पुरा शक्रः सुस्नातोऽत्र द्विजोत्तम!॥ २७८॥

धनदस्य निधीन्सर्वाञ्जहार स च मायया। कश्यपोऽत्र तपस्तेपे शिवाराधनतत्परः॥

अस्मिंस्तीर्थे भरद्वाजो योगसिद्धिमवाप्तवान् ।
अस्मिंस्तीर्थे पुरा विप्र ! योगेशाःशान्तमानसाः ॥ २८० ॥

योगस्य फलभूमिं तु लेभिरे सनकादयः । अस्मिन्माघे तु ये स्नाता गङ्गायमुनसंगमे
तारारूपाश्च ते सर्वे तैर्व्याप्तं सकलंजगत् । विन्दन्ति कामिनः कामान्मुक्तियान्तिमुमुक्षवः

विन्दन्ति साधकाः सिद्धिं प्रयागे हि द्विजोत्तम ! ।
साम्प्रतं मुक्तिकामास्तु कन्याश्चाऽपि सुतश्च ते ॥ २८३ ॥

मद्वाक्यादत्र मज्जन्तु सर्वे त्वं चसितासिते । प्राक्कालिकाघविध्वंसिवेणीजलबलेन तु
लभन्तामखिलां लक्ष्मीं प्राप्तशापमहाफलाम् । एवमार्षवचः सत्यमतीन्द्रियमलङ्घनम् ॥

श्रुत्वा चोत्कण्ठचित्तास्ते सर्वे स्नानाय चोद्यताः ।
प्रयागं प्राप्य दुष्प्राप्यं पैशाच्यं विजहुः क्षणात् ॥ २८६ ॥
विमुक्ताः शापदुःखेन तनुं स्वां स्वां च लेभिरे ।

दृष्ट्वा वेदनिधिः पुत्रं ताः कन्यादिव्यरूपिणीः । तुष्टाव लोमशम्प्रीत्या प्रसन्नेनान्तरात्मना
त्वदनुग्रहमात्रेणोत्तीर्णः पापमहार्णवः । इदानीमुचितं ब्रूहि बालानामृषिसत्तम ॥२८८

लोमश उवाच ।

कुमारोऽधीतवेदोऽयंसमाप्तनियमो युवा । आसां तु सानुरागाणां गृह्णातु करपङ्कजम्
ततो लोमशवाक्येन स्वपितुर्वचनात्तदा । विवाहविधिना चाऽऽशु ब्रह्मचारी सधार्मिकः
शुभद्रव्यैश्च मन्त्रैश्च मुनिभिः कृतमङ्गलः । पञ्चानामपि कन्यानां पाणिं जग्राह धर्मतः
आनन्दिन्यस्तदा सर्वाः कन्याः पूर्णमनोरथाः । बभूवुः सकुमारश्च सन्तुष्टश्च बभूव ह
दत्त्वानुज्ञां मुनिः सोऽथ लोमशस्तैर्नमस्कृतः । जगाम स्वाश्रमं मेरुं पर्वतं सुरसेवितम्
ततो वेदनिधीराजन्स्नुषाः पञ्च सुतं तथा । पुरस्कृत्य मुदायुक्तो धनदस्य पुरं ययौ ॥

इति नृपवर ! माघे स्नानसंजातपुण्या मुनिवरवचसा द्राक्तीर्थराजे प्रयागे
सकलकलुषमुक्ताः पञ्चगन्धर्वकन्या अलमभिमतलाभात्प्राप्य हर्षं च जग्मुः
परमिममितिहासं पावनं तीर्थभूतं वृजिनविलयहेतुं यः शृणोतीह नित्यम् ।
स भवति खलु पूर्णः सर्वकामैरभीष्टैर्व्रजति च सुरलोकं दुर्लभं धर्मयुक्तः

इतिहासमिमं श्रुत्वा पूजयेद्यस्तु पाठकम् । गोभिर्हिरण्यवस्त्रैश्च ब्रह्मतुल्यो यतो हि सः
वाचके पूजिते यस्माद्विष्णुर्भवति पूजितः । तस्मात्प्रपूजयेन्नित्यं यदिच्छेत्सफलं भवम् ।
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माघमाहात्म्ये वसिष्ठदिलीपसंवादे गन्धर्वकन्यापरिणयो-
नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥१२८ ॥

---

# एकोनत्रिंशदधिकशततमोऽध्यायः

## विष्णुमहिमवर्णनम्

पार्वत्युवाच ।

श्रुतं कार्त्तिकमाहात्म्यं माघस्य च मया विभो ! ।
अधुना श्रोतुमिच्छामि मुक्तिदं कर्म चोत्तमम् ॥ १ ॥
श्रेष्ठा भक्तिस्तु का प्रोक्ता वद विश्वेश्वर प्रभो । येन विज्ञानमात्रेण नराःसुखमवाप्नुयुः
महादेव उवाच ।
तल्लीनचित्तः स पुमान्सा भक्तिः परमा मता । दयाधर्मपरो नित्यं विष्णुधर्मेषु तत्परः
फलमूलजलाहारी शङ्खचक्रप्रधारकः । त्रिकालं पूजयेद्विष्णुं सा भक्तिः सात्त्विकी मता
उत्तमा सात्त्विकी प्रोक्ता राजसी चैव मध्यमा ।
कनिष्ठा तामसीचैव त्रिविधा भक्तिरुच्यते ॥ ५ ॥
श्रीधरे तु प्रकर्त्तव्या मुक्तिकामफलेप्सुभिः । अहङ्कारेण रूपेण दम्भमात्सर्यमायया॥६
ये कुर्वन्ति जना भक्तिं तामसी सा उदाहृता। परस्योत्सादनार्थं वा दम्भमुद्दिश्य वाऽथवा
या भक्तिः क्रियते देवे तामसी सा प्रकीर्तिता । विषयान्प्रतिसंधाय यशऐश्वर्यमेव वा
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः । कर्मक्षयार्थे कर्त्तव्या ब्राह्मणैर्ज्ञानतत्परैः॥

विष्णोर्ह्यात्मार्पणीं बुद्धिं सा भक्तिः सात्त्विकी मता ।
अतो वै सर्वथा देवि संसेव्यः सर्वदा हरिः ॥ १० ॥
तामसेन तु भावेन तामसत्वं हि लभ्यते । राजसो राजसेनैव सात्त्विकेन तु सात्त्विकः
वेदाध्यायरतः श्रीमान्रागद्वेषविवर्जितः । शङ्खचक्रधरो विप्रः सर्वदा शुचिरुच्यते ॥ १२
कर्मकाण्डे प्रवृत्तो यः सर्वदा विष्णुनिन्दकः ।
निन्दकस्तज्जनानां च महाचाण्डालउच्यते ॥ १३ ॥
वेदाध्यायरतानित्यं नित्यं वै यज्ञयाजकाः । अग्निहोत्ररता नित्यं विष्णुधर्मपराङ्मुखा
निन्दन्ति विष्णुधर्मांश्च वेदवाह्याः सुरेश्वरि ॥ १४ ॥
कुर्वन्तिशान्तिं विबुधा प्रहृष्टाः क्षेमं प्रकुर्वन्ति पितामहाद्याः ।
स्वस्ति प्रयच्छन्ति मुनीन्द्रमुख्या गोविन्दभक्तिं वहतां नराणाम् ॥ १५ ॥
शुभाग्रहा भूतपिशाचयुक्ता ब्रह्मादयो देवगणाः प्रसन्नाः ।
लक्ष्मीःस्थिरा तिष्ठति मन्दिरे च गोविन्दभक्तिं वहतां नराणाम् ॥ १६ ॥
गङ्गागयानैमिषपुष्कराणि काशीप्रयागः कुरुजाङ्गलानि ।
तिष्ठन्ति देहे कृतभक्तिपूर्वं गोविन्दभक्तिं वहतां नराणाम् ॥ १७ ॥
एवमाराधयेद्विद्वान्भगवन्तं श्रिया सह । कृतकृत्यो भवेन्नित्यं स विप्रो नाऽत्रसंशयः
क्षत्रियो वाथ वैश्यो वा शूद्रो वा सुरसत्तमे । भक्तिं कुर्वन्तिशेषेण मुक्तिं यातिस वै नरः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे विष्णुमहिम-
वर्णनं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

---

## त्रिंशदधिकशततमोऽध्यायः

### शालग्रामशिलापूजनमाहात्म्यवर्णनम्

पार्वत्युवाच ।

शालग्रामशिलाशुद्धामूर्त्तयस्सन्ति भूतले । तासां चैव तु मूर्तीनां पूजनं कतिधा स्मृतम्

ब्राह्मणैः कति पूज्यास्ताः क्षत्रियैर्वा सुरेश्वर ! ।
वैश्यैर्वाऽपि कथं शूद्रैः स्त्रीभिर्वाऽपि समादिश ॥ २ ॥

महादेव उवाच ।

शालग्रामशिला पुण्या पवित्रा धर्मकारिणी । यस्या दर्शनमात्रेण ब्रह्महा शुध्यते नरः
तद्गृहं सर्वतीर्थानां प्रवरं श्रुतिनोदितम् । यत्रेयं सर्वदा मूर्तिः शालग्रामशिला शुभा॥
ब्राह्मणैः पञ्चपूज्याः स्युश्चतस्रः क्षत्रियैस्तथा ।
वैश्यैस्तिस्रस्तथा पूज्या एका पूज्या प्रयत्नतः ॥ ५ ॥
तस्या दर्शनमात्रेण शूद्रो मुक्तिमवाप्नुयात् । अनेन विधिना देवि ये नराः पूजयन्ति वै
भोगान्सर्वांस्तत्र भुक्त्वा यान्ति विष्णोः पर पदम् ।
इयं सा महती मूर्तिः सर्वदा पापहारिणी ॥ ७ ॥
कैलासाद्यं फलं देवि जायते पूजनाद्यतः । तत्र गङ्गा च यमुना गोदावरी सरस्वती ॥
तिष्ठते च शिला यत्र सर्वं तत्र न संशयः । किमत्र बहुनोक्तेन भूयो भूयो वरानने ॥६
पूजनं मनुजैः सम्यक्कर्त्तव्यं मुक्तिमिच्छुभिः । भक्तिभावेन देवेशि येऽर्चयन्ति जनार्दनम्
तेषां दर्शनमात्रेण ब्रह्महा शुध्यते जनः । दासभावेन ये शूद्राः स्वर्चनं कुर्वते सदा ॥११
तेषां पुण्यं न जानन्ति ब्रह्माद्याश्च सुरेश्वरि । भक्तिभावेन ये विप्रा हरिमभ्यर्चयन्ति वै
एकविंशतिकुलं तैस्तु तारितं तेषु जन्मसु । शङ्खचक्राङ्कितो यस्तु विप्रः पूचनमाचरेत्
पूजितं तु जगत्सर्वं तेन विष्णुप्रपूजनात् । पितरः संवदन्त्यस्मत्कुले जाताश्च वैष्णवाः
तत्कुलं तारितं तैस्तु यावदाभूतसंप्लवम् ।
ते तु चास्मान्समुद्धृत्य नयन्ते विष्णुमन्दिरम् ॥ १५ ॥
स एव दिवसो धन्यो धन्या माताऽथ बान्धवाः ।
पिता तस्य च वै धन्यो धन्या वै सुहृदस्तथा ॥ १६ ॥
सर्वे धन्यतमा ज्ञेया विष्णुभक्तिपरायणाः । तेषां दर्शनमात्रेण महापापात्प्रमुच्यते ॥
उपपातकानि सर्वाणि महान्ति पातकानि च ।
तानि सर्वाणि नश्यन्ति वैष्णवानां च दर्शनात् ॥ १८ ॥

पावकाइवदीप्यन्ते ये नरा वैष्णवा भुवि। विमुक्ताः सर्वपापेभ्यो मेघेभ्यइव चन्द्रमाः
आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम्।
तत्सर्वं नाशमायाति वैष्णवानां च दर्शनात् ॥ २० ॥
हिंसादिकं च यत्पापं ज्ञानाज्ञानकृतं च यत्। तत्सर्वं नाशमायाति दर्शनाद्वैष्णवस्यच
निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धताम्।
दर्शनादेव साधूनां सत्यं तुभ्यं मयोदितम् ॥ २२ ॥
संसारकर्दमालेपप्रक्षालनविशारदः। पावनः पावनानां च विष्णुभक्तो न संशयः ॥
प्रत्यहं विष्णुभक्ता ये स्मरन्ति मधुसूदनम्। ते तु विष्णुमया ज्ञेया विष्णुस्तत्रनसंशयः
नवनीलघनश्यामं नलिनायतलोचनम्। शङ्खचक्रगदापद्मधरं पीताम्बरावृतम् ॥ २५ ॥
कौस्तुभेन विराजन्तं वनमालाधरं हरिम्। उल्लसत्कुण्डलज्योतिःकपोलवदनश्रिया ॥
विराजितं किरीटेन वलयाङ्गदनूपुरैः। प्रसन्नवदनाम्भोजं चतुर्बाहुं श्रियान्वितम् ॥
एवं ध्यायन्ति ये विप्रा विष्णुं चैव तु पार्वति!।
ते विप्रा विष्णुरूपाश्च वैष्णवास्ते न संशयः ॥ २८ ॥
तेषां दर्शनमात्रेण भक्त्या वा भोजनेन वा। पूजनेन च देवेशि वैकुण्ठं लभते ध्रुवम् ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
शालग्रामशिलापूजनमाहात्म्यं नाम त्रिंशदधिकशततमोऽध्यायः ॥१३०॥

---

## एकत्रिंशदधिकशततमोऽध्यायः

### श्रीविष्णुमाहात्म्यवर्णनम्

पार्वत्युवाच।

अनन्तं वासुदेवस्य कीदृशं स्मरणं स्मृतम्। यच्छ्रुत्वा न पुनर्मोहो मानुषाणांप्रजायते

महादेव उवाच।

दृष्ट्वा तत्त्वेन देवेशि स्मराम्येनं तु नित्यशः। तृषातुरो यथा वारि तद्वद्विष्णुंस्मराम्यहम्

हिमेनाकुलितं विश्वं स्मरत्यग्निं यथा तथा । तद्वदेव तु वै विष्णुं स्मरन्ति विबुधादयः

पतिव्रता यथा नारी पतिं स्मरति नित्यशः ।

तथा स्मरामि लोकेशं विष्णुं विश्वेश्वरेश्वरम् ॥ ४ ॥

भयार्त्तः शरणं यद्वदथ लोभी यथा धनम् ।

पुत्रकामो यथा पुत्रं तथा विष्णुं स्मराम्यहम् ॥ ५ ॥

दूरस्थोऽपि यथा गेहं चातको माधवं यथा । ब्रह्मविद्यां ब्रह्मविदस्तथा विष्णुंस्मराम्यहम्

हंसा मानसमिच्छन्ति मुनयः स्मरणं हरेः ।

भक्ताश्च भक्तिमिच्छन्ति तथा विष्णुं स्मराम्यहम् ॥ ७ ॥

प्राणिनां वल्लभो देहो यत्र आत्माऽवतिष्ठते ।

आयुर्वाञ्छन्ति ये जीवास्तथा विष्णुं स्मराम्यहम् ॥ ८ ॥

भ्रमराश्च यथापुष्पं चक्रवाका दिवाकरम् । यथात्मवल्लभा भक्ति तथा विष्णुं स्मराम्यहम्

अन्धेनाकुलिता लोका दीपं वाञ्छन्ति वै यथा । तथा वै पुरुषा लोके स्मरणं केशवस्य च

यथाश्रमार्त्ताविश्रामंनिद्राव्यसनिनोयथा । गतालस्यायथाविद्यांतथाविष्णुं स्मराम्यहम्

मातङ्गाःपार्वतींभूमिंसिंहा वनगजादिकम् । तथैवस्मरणंविष्णोः कर्तव्यंपापभीरुभिः॥

सूर्यकान्तेरवेर्योगाद्वह्निस्तत्रप्रजायते । एवं वै साधु संयोगाद्धरौ भक्तिः प्रजायते ॥

शीतरश्मेर्यथाकान्तश्चन्द्रयोगादपः श्रयेत् । एवं वैष्णवसंयोगान्मुक्तिर्भवति शाश्वती॥

कुमुद्वती यथा सोमं दृष्ट्वा पुष्पं विकासते । तद्वदेव कृता भक्तिर्मुक्तिदा सर्वदा नृणाम्

यथा नला या संत्रस्ता भ्रमरी स्मरणं चरेत् । तेन स्मरणयोगेन नलासारूप्यतामियात्

गोपीभिर्जारबुद्धया च विष्णोश्च स्मरणं कृतम् ।

ताश्च सायुज्यतां नीतास्तथा विष्णुं स्मराम्यहम् ॥ १७ ॥

केऽपि वै दुष्टभावेन च्छद्मभावेन केचन । केचापि लोभभावेन निःस्पृहाश्चैव केचन

भक्त्या वा स्नेहभावेन द्वेषभावेन वा पुनः । केऽपि स्वामित्वभावेन बुद्धया वा बुद्धिपूर्वकम्

येन केनापि भावेन चिन्तयन्ति जनार्दनम् ।

इहलोके सुखं भुक्त्वा यान्ति विष्णोः परं पदम् ॥ २० ॥

अहोविष्णोश्च माहात्म्यमद्भुतं लोमहर्षणम् । यद्दृच्छयापि स्मरणं त्रिधा मुक्तिप्रदायकम्
न धनेन समृद्धेन विपुलाविद्यया तथा । एकेन भक्तियोगेन समीपे दृश्यते क्षणात् ॥
सान्निध्येऽपि स्थितो दूरे नेत्रयोरञ्जनं यथा । भक्तियोगेन दृश्येत भक्तैश्चैव सनातनः
इदं तत्त्वमिदं तत्त्वं मोहितो देवमायया । भक्तितत्त्वं यदा प्राप्तं तदा विष्णुमयं जगत्

इन्द्राद्यैरमृतं प्राप्तं सुखार्थे शृणु सुन्दरि ! ।
तथापि दुःखितास्ते वै भक्त्या विष्णोर्यथा विना ॥ २५ ॥

भक्तिमेवाऽमृतंप्राप्य पुनर्दुःखं न जायते । वैकुण्ठाख्यं पदं प्राप्य मोदते विष्णुसन्निधौ

वारि त्यक्त्वा यथा हंसः पयः पिबति नित्यशः ।
एवं धर्मान्परित्यज्य विष्णोर्भक्तिं समाश्रयेत् ॥ २७ ॥

अन्यभक्तिं परित्यज्य विष्णुभक्तिं समाश्रयेत् । तोयं वद्ध्वातुवस्त्रेण कृतंकार्यंकथंभवेत्
प्राप्य देहं विना भक्तिं क्रियते स वृथाश्रमः । विष्णुभक्तिं विनाधर्मानुपदिशन्तियेजनाः

ते पतन्ति सदा घोरे नरके नाऽत्रसंशयः ॥ २९ ॥

बाहुभ्यां सागरं ततु यद्वन्मूर्खोऽभिवाञ्छति । संसारसागरं तद्वद्विष्णुभक्तिं विना नरः
विष्णुभक्तिं च रक्षन्ति कर्मणा पात्यते यदि । अकिञ्चनः स्पृहायुक्तो मेरौधत्तेयथास्पृहाम्
तव भक्तौ तथा देव मया हि क्रियतेस्पृहा । जन्मान्तरे हि सा भक्तिर्मामकीयत्करोतिहि
वह्निर्यथेह स्वल्पोऽपि दहते विविधं वनम् । तद्वदेव तु सा भक्तिरणुमात्रा कृता मया
शतैश्च श्रूयते भक्तिः सहस्रैरपि बुध्यते । तेषां मध्ये तु देवेशि भक्तो ह्येकः प्रजायते ॥
बुद्धिं परेषां दास्यन्ति लोके बहुविधा जनाः । स्वयमाचरते सोऽपि नरः कोटिषुदृश्यते
पूजया हस्यते भक्तिर्जपेन परिहस्यते । एवं भावो हि देवेशो भक्तिस्तेनैव गृह्यते॥३६॥
सागरे च यथा पोतः कूपे द्रोणोपवेशनम् । यस्य भावो हि तद्वच्च भक्तिःसा तेनगृह्यते
मूले सिक्तस्य वृक्षस्य पत्रं शाखासु दृश्यते । भजनादेव भो देवि फलमग्रे प्रतिष्ठितम्॥
पानीयहारिणा यद्वद्दृष्टं चित्तं प्रधीयते । तद्वद्देवे हरौ चित्तं धृत्वा मोक्षमवाप्नुयात् ॥

शैशवे च यथा माता गुडं स्तोकं ददाति वै ।
पुनर्याचति वै बालो गुडं वै लोभकारणात् ॥ ४० ॥

नीरे नीरं यथा क्षिप्तं दुग्धे दुग्धं घृते घृतम् । तद्वद्भेदं न पश्यन्ति विष्णुभक्तिप्रसादतः
भानुः सर्वगतो यद्वद्वह्निः सर्वगतो यथा । भक्तिः स्थितस्तथा भक्तः कर्मभिर्नैव बाध्यते

अजामिलः स्वधर्मं च त्यक्त्वा पापं समाचरन् ।
पुत्रं नारायणं स्मृत्वा मुक्तिं वै प्राप्तवान्ध्रुवम् ॥ ४३ ॥
दिवारात्रौ च ये भक्ता नाममात्रोपजीविनः ।
वैकुण्ठवासिनस्ते वै तत्र वेदा हि साक्षिणः ॥ ४४ ॥

अश्वमेधादियज्ञानां फलं स्वर्गेऽपि दृश्यते । तत्फलं तु समग्रं वै भुक्त्वा वै सम्पतन्तिच
विष्णुभक्तास्तथा देवि भुक्त्वा भोगाननेकशः । वैकुण्ठं प्राप्य वा तेषां पुनरागमनंकदा

विष्णुभक्तिः कृता येन विष्णुलोके वसत्यसौ ।
दृष्टान्तं पश्य देवेशि विष्णुभक्तिप्रसादतः ॥ ४७ ॥
ग्रावाणो जलमध्यस्थाः शतशस्तेन तारिताः ।
विना जलं सोमकान्तो विष्णुभक्तस्य मानसम् ॥ ४८ ॥

दर्दुरो वसते नीरे षट्पदो हि वनान्तरे । गन्धं वेत्ति कुमुद्वत्या भक्तो भक्तौ तथा हरेः
गङ्गातटे वसन्त्येक एके वै शतयोजनम् । कश्चिद्गङ्गाफलं वेत्ति विष्णुभक्तिपरस्तथा ॥
कर्पूरागुरुभारं हि उष्ट्रो वहति नित्यशः । मध्यगन्धं न जानाति तथा विष्णुस्वहिर्मुखाः

मृगाः शालं हि जिघ्रन्ति कस्तूरीगन्धमिच्छवः ।
स्वनाभिस्थं न जानन्ति तथा विष्णुं वहिर्मुखाः ॥ ५२ ॥

उपदेशो हि मूर्खाणां वृथा वै नगनन्दिनि । तथैव विष्णुभक्तेर्हिउपदेशो वहिर्मुखे ॥
अहिना च पयः पीतं तत्पयो हि विषायते । तथा वै चान्यभक्तानां विष्णुभक्तिर्विषायते
चक्षुर्विना यथा दीपं दृष्ट्वा दर्पणमेव च । समीपस्था न पश्यन्ति तथा विष्णुं बहिर्मुखाः
पावको हि यथा धूमैरादर्शोऽपि मलेन च । यथोल्वेनावृतो गर्भो देहे कृष्णस्तथावृतः
दुग्धे सर्पिः स्थितं यद्वत्तिले तैलं तु सर्वदा । चराचरे तथा विष्णुर्दृश्यतेनगनन्दिनि
एकसूत्रे मणिगणा धार्यन्ते वहवो यथा । एवं व्रह्मादिभिर्विश्वं संप्रोतं व्रह्मचिन्मये
यथाकाष्ठे स्थितो वह्निर्मथनादेव दृश्यते । एवं सर्वगतो विष्णुर्ध्यानादेव प्रदृश्यते ॥

आदिरेको भवेद्दीपस्तस्माज्जाताः सहस्रशः ।
एवमेकः स्थितो विष्णुः सर्वं व्याप्य प्रतिष्ठते ॥ ६० ॥
यथा सूर्योदये ज्योतिः पुष्करे तिष्ठते सदा ।
दृश्यते बहुधा नीरे लोके विष्णुस्तथा हि सः ॥ ६१ ॥

मारुतः प्रकृतिस्थोऽपिनानागन्धवहःसदा । ईश्वरःसर्वजीवस्थोभुङ्क्तेप्रकृतिजान्गुणान्
शर्कराविषसंयोगान्नीरं भवति यादृशम् । स भूत्वा सदृशो ह्यात्मा कर्मणःफलमश्नुते
उर्वी च नीरसंयोगान्नानावृक्षाप्रजायते । प्रकृतेर्गुणसंयोगान्नानायोनिषु जायते ॥
गजे वै मशके चैव देवे वा मानुषेऽपिवा । नाधिको न च न्यूनो वै निष्ठोदेहेसनिश्चलः

ब्रह्मादिस्तम्बपर्यन्ता ये चात्र भुवि मानवाः ।
देवा यक्षास्तथा नागा गन्धर्वाः किन्नरादयः ॥ ६६ ॥

तेषु सर्वेषु दृश्यन्ते जले चन्द्रमसो यथा । ससच्चिदानन्दशिवः स महेशो हि दृश्यते

स वै विष्णुस्तथा प्रोक्तः सोऽयं सर्वगतो हरिः ।
वेदान्तवेद्यःसर्वेशः कालातीतो ह्यनामयः ॥ ६८ ॥

एवं तं वेत्ति यो देवि स भक्तो नात्रसंशयः । एको हि बहुधाज्ञेयो बहुधाप्येक एवसः
नामरूपविभेदेन जल्प्यते बहुधा भुवि । चक्षुषा न रवेर्ज्योतिर्भानुना चक्षुरेधते ॥७०॥
परमात्मा तथाचात्मा प्रतिदेहे तु सर्वदा । घटेघटे यथाकाशस्तस्मिन्भग्ने यथास्थितः
रूपे रूपे तथा त्वं हि भग्ने तस्मिन्सुनिश्चलः । यथाकाष्ठमयं रूपं पतते प्रभुणा विना
क्रिमिमेदोमयो देहः पतते चात्मना विना । हेम्नो भवन्ति वर्णाश्च वह्निनायान्तिपूर्ववत्
तद्वज्जीवाः प्रपद्यन्ते भक्ता गौ पूर्वरूपताम् । स्वघनेनावृतं सूर्यं मूढाःपश्यन्तिनिष्प्रभम्
तथाऽज्ञानधियो मूढा न जानन्ति तमीश्वरम् । निर्विकल्पं निराकारं वेदान्तैःपरिपठ्यते

निराकाराच्च साकारं स्वेच्छया च प्रकाशते ।
तस्मात्संजातमाकाशं निःशब्दं गुणवर्जितम् ॥ ७६ ॥
आकाशान्मारुतो जातः सशब्दं च तदाऽभवत् ।
वातादजायत ज्योतिर्ज्योतिषश्चाभवज्जलम् ॥ ७७ ॥

तज्जलेरुक्मगर्भश्च विराड्गौ विश्वरूपधृत् । तस्य नाभिसरोजे च ब्रह्माण्डानां च कोटयः
प्रकृतिः पुरुषस्तस्मान्निर्मितं तु त्रिधा जगत् । तयोर्द्वयोश्च संयोगात्तत्त्वयोगोऽभ्यजायत

सात्त्विकी विष्णुसंभूतिर्ब्रह्मा गौ राजसः स्मृतः ।
शिवस्तु तामसः प्रोक्तएभिः सर्वं प्रवर्त्तितम् ॥ ८० ॥

एका ब्राह्मी स्थितिर्लोके कर्मबीजानुसारतः । तथा संहरते विष्णुः सर्वलोकानुशेषतः
तिष्ठत्यसौ तदा तत्र भगवान्विष्णुरव्ययः । एवं सर्वगतो विष्णुरादिमध्यान्त एव च

अविद्यया न जानन्ति लोका गौ कर्मनिश्चिताः ।
वर्णोचितानि कर्माणि यः कालेषु प्रकारयेत् ॥ ८३ ॥

यत्कर्म विष्णुदैवत्यं न हि गर्भस्य कारणम् । वेदान्तशास्त्रे मुनिभिः सर्वदैव विचार्यते
ब्रह्मज्ञानमिदं देहे तदहं परिकीर्त्तये । शुभाशुभस्य कार्यं च कारणं मन एव हि ॥८५॥
मनसा शुध्यते सर्वं तदा ब्रह्म सनातनम् । मनएवसदा बन्धुर्मनएव सदा रिपुः ॥८६॥
मनसा तारिताः केचिन्मनसा पातिताश्चके । मध्ये सर्वपरित्यागो बाह्ये कर्मतथाचरन्
एवमेवकृतं कर्म कुर्वन्नपि न लिप्यते । पद्मपत्रं यथानीरलेशैरपि न लिप्यते ॥ ८८ ॥

अग्निरग्नौ यथा क्षिप्तो भक्त्या च किं प्रयोजनम् ।
यदाभक्तिरसो ज्ञातो न मुक्ती रोचते तदा ॥ ८९ ॥
योगैरष्टविधैर्विष्णुर्न प्राप्यश्चेह जन्मनि ।
भक्त्या वा प्राप्यते विष्णुः सर्वदा सुलभो भवेत् ॥ ९० ॥

वेदान्तैः प्राप्यते ज्ञानं ज्ञानेन ज्ञेयमेव च । तत्तु ज्ञेयं यदा प्राप्तं तदा शून्यमिदं जगत् ॥
बलेन प्राप्यते विष्णुर्योगैरष्टविधैश्च किम् । सर्वेषामेव भावानां भावशुद्धिः प्रशस्यते

आलिङ्ग्यते यथा कान्ता यथा भावस्तथा फलम् ।
उपानद्युक्तपादो हि वेत्ति चर्ममयीं महीम् ॥ ९३ ॥
बुद्धिर्यथा विधा यस्य तद्वत्स मन्यते जगत् ।
दुग्धेन सिक्तो निम्बोऽपि कटुभावं न तु त्यजेत् ॥ ९४ ॥

प्रकृतिं यान्ति भूतानि उपदेशो निरर्थकः । छित्त्वा गौ सहकारं च फलं पत्रंकथंलभेत्

इन्द्रियाणां सुखार्थेन वृथा जन्मकथं नयेत् । स्थाल्यां वैडूर्यमय्यां हिपच्यतेचौषधंयथा
दह्यते चागदस्तद्वद्वृथा जन्मकथं भवेत् । निधानं च गृहे क्षिप्त्वा शुभःसेवांकथंचरेत्
त्यक्त्वा वैकुण्ठनाथं तमन्यमार्गे कथं रमेत् । भक्तिहीनैश्चतुर्वेदैःपठितैःकिं प्रयोजनम्
श्वपचो भक्तियुक्तस्तु त्रिदशैरपि पूज्यते । स्वकरैकङ्कणं बद्ध्वा दर्पणैः किंप्रयोजनम्
ब्रह्मरुद्रादिभिर्देवैर्दत्तैश्वर्याश्च सेवकाः । अर्पितं नैव गृह्णन्ति प्रभोश्चैव तु किञ्चन ॥

अकिञ्चनाय भक्ताय दातुं नालं गतो वरम् ।
निःशरीरस्य कृष्णस्य तत्र ध्यानं कथं भवेत् ॥ १०१ ॥
साकारं बहवो दृष्ट्वा गता भक्त्या च तत्पदम् ।
पूजाभक्तिः कथं शून्ये साकारे कथ्यते बुधैः ॥ १०२ ॥
शून्यमार्गे कथं याति आधारेण विना नरः ।
साकारो यः स्वयं स्वामी निराकारः स वै प्रभुः ॥ १०३ ॥

साकारो हि सुखेनैव निराकारो न दृश्यते । सेवारसश्च साकारे निराकारेण वै रसः
साकारेण निराकारो ज्ञायते स्वयमेव हि । हरिस्मृतिप्रसादेन रोमाञ्चिततनुर्यदा ॥
नयनानन्दसलिलं मुक्तिर्दासी भवेत्तदा । बाल्ये च यत्कृतं पापं तत्कथं न विनश्यति
पूजादानव्रतैस्तीर्थैर्जपहोमैस्त्वदर्पितैः । निजधर्मं परित्यज्य तपोघोरं कथं चरेत् ॥
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । विधिं सन्त्यज्य शास्त्रीयं तपोघोरं कथंचरेत्

आश्रमेण विना मूढो नैव सिद्धिमवाप्नुयात् ।
ब्रह्मणा निर्मिता वर्णाः स्वे स्वे धर्मे नियोजिताः ॥ १०६ ॥

स्वधर्मेणागतं द्रव्यं शुक्लद्रव्यं तदुच्यते । शुक्लद्रव्येण यद्दानं दीयते श्रद्धयान्वितम् ॥
स्वल्पेनाऽपि महापुण्यं तस्य सङ्ख्या न विद्यते । नीचसङ्गेन यद्द्रव्यमानीतं गृहकर्मसु
तेन द्रव्येण यद्दानं कृतं वै मनुजादिभिः । तत्फलं न भवेत्ते वै नैव तत्फलभागिनः ॥
यादृशं कुरुते कर्म इन्द्रियाणां सुखेच्छया । तादृशीं योनिमाप्नोति मूढो हि ज्ञानदुर्बलः
इह यत्कुरुते कर्म तत्परत्रोपभुज्यते । पुण्यमाचरतः पुंसो यदि दुःखं प्रजायते ॥११४
तदा तापो न कर्त्तव्यस्तत्कर्म पूर्वदेहजम् । पापमाचरतः पुंसो जायते सुखमेव च ॥

न कर्त्तव्यस्तदा हर्षः सुखे तत्र सुरेश्वरि । रज्जुबद्धाश्च पशवः प्रभुणास्वेच्छया यथा
नीयन्ते कर्मबन्धेन मनुजा अपि भूतले । शाखामृगो वनचरो नृत्यते च गृहेगृहे ॥११७
एवं च कर्मणा जीवा नीयन्ते सर्वयोनिषु । क्रीडताकन्दुको यद्वत्प्रेर्यते प्रभुणेच्छया॥
कर्मणा वा तथा जन्तुर्नीयते सुखदुःखयोः । प्राणी स्वकर्मभिर्बद्धो न शक्तो बन्धनिग्रहे
देवा गौ कर्मभिर्बद्धा ऋषयश्च तथा परे । कैलासे रुद्रदेहस्था भुजगा विषभोजिनः॥१२०
असमर्थाः सुधां भोक्तुं कर्मयोनिर्बलीयसी । नीरोगदेहदाता यो बुधैःसूर्यो हि कथ्यते
तद्रथे सारथिः पङ्गुःकर्मयोनिर्बलीयसी । इन्द्रद्युम्नो हि राजर्षिर्गजत्वं कर्मणा गतः ॥
समर्थस्वामिना तस्मिन्कर्मयोनिर्वृथा कृता । रुद्रब्रह्मादयो देवा मानवाश्चासुराश्च ये
ते सर्वे कर्मबद्धाश्च विचरन्ति महीतले । कर्माधीनं जगत्सर्वं विष्णुना निर्मितं पुरा
तत्कर्म केशवाधीनं रामनाम्ना विनश्यति । सर्वत्राऽपि स्थितं तोयं मुक्तिदं तु सितासिते
एवमाचरतां कर्म मुक्तिदं केशवार्चनम् । इन्द्रियाणां सुखार्थाय यः कर्म मनसा चरेत्
अहं कृतेन मन्येत केवलं देहमेव हि । मनसा संस्मरञ्जन्तुः प्रायश्चित्तं समाचरेत् ॥१२७
स पूर्वकर्मभोक्ता च अग्रे कर्म न वर्धते । प्रशंसन्ति ग्रहान्केचित्केचित्प्रेतपिशाचकान्

केचिद्देवान्प्रशंसन्ति ह्योषधीः केचिदूचिरे ।
केचिन्मन्त्रं च सिद्धिं च केचिद्बुद्धिं पराक्रमम् ॥१२९॥

उद्यमं साहसं धैर्यं केचिन्नीतिं बलं तथा । अहं कर्म प्रशंसामि सर्वे कर्मानुवर्तिनः ॥
इति मे निश्चिता बुद्धिः कथ्यते पूर्वसूरिभिः । यदा पुण्यमयो जन्तुः पापं किञ्चिन्न विद्यते
ज्ञानं हि द्विविधं चैव तदा पुण्यं सुखं भवेत् । पापं पुण्यं समं यस्य तदा कर्मसु विद्यते
समं योगं यदा द्वन्द्वं तदानन्दपदं व्रजेत् । बाह्ये सर्वपरित्यागी मनसा संस्पृही भवेत्

तद्वृथाचरितं तस्य तेन तत्पापभोगिनः ।
बाह्ये करोति कर्माणि मनसा निःस्पृहो भवेत् ॥ १३४ ॥
त्यागोऽसौ मध्यमो ज्ञेयो न तु पूर्णफलं लभेत् ।
बाह्यमध्ये परित्यज्य बुद्ध्याशून्यावलम्बनम् ॥ १३५ ॥

त्यागः स उत्तमो ज्ञेयो योगिनामपि दुर्लभः । क्रोधात्सर्वं त्यजन्त्येके केचिद्वादप्रभावतः

कष्टात्सर्वं त्यजन्त्येके त्यागाः सर्वे तु मध्यमाः ।
सुबुद्ध्या श्रद्धया युक्तो न क्रोधादिवशं गतः ॥१३७ ॥

कर्मणा ह्यवलिप्तोऽपि सुगतिं याति मानवः । शुचीनां श्रीमतां गेहे धीमतां योगिनामपि
योगाद्भ्रष्टस्तु जायेत कुले वै द्विजपूर्वके । स्वल्पेनैव तु कालेन पूर्णयोगं च विन्दति
चिदानन्दपदं गच्छेद्योगभक्तिप्रसादतः । पङ्केनैवयथापङ्कं रुधिरं रुधिरेण वै ॥
हिंसया कर्मणा कर्म कथं क्षालयितुं क्षमः । हिंसाकर्ममयो यज्ञः कथं कर्मक्षये क्षमः ॥

स्वर्गकामकृता यज्ञाः स्वर्गे ते चाल्पसौख्यदाः ।
अनित्यानि तु सौख्यानि भवन्ति च बहून्यपि ॥ १४२ ॥
नित्यं सौख्यं न तेष्वस्ति विना भक्त्या हरेः क्वचित् ।
सार्वभौमसुखं राज्यं स्वर्गे चाऽपि तथा सुखम् ॥ १४३ ॥
अन्यत्किञ्चिन्न वाञ्छामि गर्भवासाद्बिभेम्यहम् ।
ग्रावा वै भिद्यते लोहैर्माणिक्यं नैव भिद्यते ॥ १४४ ॥

नानाकाममयी बुद्ध्या विष्णुभक्तिर्नभिद्यते । बकोजलचरान्भुङ्क्तेमण्डूकादींश्च वर्जयेत्
तथा यमः सर्वहन्ता वर्जयेत्कृष्णसेवकान् । यो रक्षति स हर्ता च स वै पालकउच्यते
अपराधशतैर्युक्तं स्वस्थाने नय मामितः । यथाकृतापराधस्य कृष्णस्तस्य कृपाकरः ॥
फलं च लभते वाद्यरक्षकः किङ्करोति चेत् । एवमात्मा च देहेऽस्मिन्परवश्यंकृपाकरः
प्राप्तो न पारः शनकैर्मल्लैर्युक्तानवापिता । व्याधस्य मुक्तिदाताचकुब्जकातारितास्वयम्

ब्रह्माद्यैर्दुर्लभः स्वप्ने सुलभो गोपमन्दिरे ।
गोपोच्छिष्टं यदा भुक्तं तदा ते तारिताःस्वयम् ॥ १५० ॥

योगिभिर्गीयते नित्यं परमात्मा जनार्दनः । अव्ययः पुरुषः श्रीमान्दृष्ट्वा तैर्देवि विस्मये
एतत्स्मरणकं दिव्यं ये पठन्ति दिनेदिने । सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम्
अनयाभावबुद्ध्या च पठनं विष्णुसन्निधौ । इह लोके सुखं भुक्त्वा परं पदमवाप्नुयात्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
विष्णुस्मरणं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

# इति श्रीपाद्मपुराणे

## षष्ठे उत्तर खण्डे

# पूर्वार्द्धं समाप्तम्

शुभमस्तु सतां सदा



